# भारविमधिकृत्य

डॉ० सत्यव्रतसिंहः

अखिलभारतीयसंस्कृत-परिषद्
लखनऊ

# भारविमधिकृत्य

डॉ० सत्यव्रत सिंहः



अखिल भारतीय संस्कृत-परिषद्, लखनऊ

# प्रकाशकीयम्

सुविदितमेवेदमस्ति संस्कृतसाहित्यरसिकानां यद् भारविविरचितं किरातकाव्यं बृहत्त्रय्यां स्वकीयं विशिष्टं स्थानं बिभर्ति । अन्विष्याऽप्यस्माभिर्नालम्भि संस्कृतजगति प्रसिद्धतराया बृहत्त्रयीकल्पनाया मूलं कुत्रापि संस्कृत-काव्यशास्त्रग्रन्थेषु । एतेनैतद् वक्तुं सुतरां शक्यं यद् बृहत्त्रय्याः प्रमाणविरहिताऽविदितमूला वेयं कल्पना कल्पनामात्रम्, अप्रामाणिकत्वादेवाऽनादरणीया च । अनादरणीययाऽप्यनया कल्पनया ग्रन्थरत्नत्रयमिदं संस्कृतकाव्यजगतः कस्मिंश्चिद् विशिष्टे स्थाने प्रतिष्ठापितम् । इदमेवाऽस्ति कारणं यत् प्रमाणशास्त्रपारङ्गतोऽपि संस्कृतकाव्यानुरागिजनो बृहत्त्रयीमियां समीचीनतया प्रत्यभिजानाति ।

महाकविकालिदासादनन्तरं संस्कृतसाहित्ये द्वितीयस्थानप्रतिष्ठापात्रस्य भारवेः काव्यसौष्ठवमधिकृत्य तैस्तैः काव्यशास्त्रमर्मज्ञैर्यद्यपि बह्वलेखि तथापि विद्वद्वर्याणां डॉ० सत्यव्रतसिंहमहोदयानां दृष्टिरेतस्मिन् विषये नवीनतासंवलितवैशिष्ट्यं किमपि क्रोडीकरोतीव । सेयं दृष्टिर् 'भारविमधिकृत्य' इत्यभिधानेन प्रस्तूयमानायामेतस्यामन्त्यायां कृतौ बुद्धिगोचरतां विशदमुपयास्यति संस्कृतकाव्यशास्त्रविचारकाणाम् । धारावाहिकरूपेण कृतिरियम् 'अजस्रया' अखिल-भारतीयसंस्कृतपरिषत्प्रकाशितया पत्रिकया पूर्वमुपस्थापिता पुरतः सहृदयानाम् । दुःखस्याऽयं विषयो यद् ग्रन्थस्याऽस्य रचयितारः डॉ० सत्यव्रतसिंहमहोदया इदानीमस्मन्मध्ये न विराजन्ते, तेषां जीवनकाले चैतत्-पुस्तकप्रकाशनस्याऽस्मत्सङ्कल्पो मनस्येवाऽतिष्ठत् । मन्ये प्रकाशितेयं 'भारविमधिकृत्य' इति पुस्तिका स्वलेखकान् स्वर्गस्थितान् डॉ० सत्यव्रतसिंहान् प्रीणयिष्यति संस्कृतसाहित्यरसिकांश्च ।

# किञ्चित्प्रास्ताविकम्

भारविमधिकृत्य कृतोऽयं ग्रन्थो महाकविचित्रवीथ्यां भारवेः स्थानं निर्धारयितुं प्रवृत्तः। कविकुलगुरुं कालिदासं कोऽपि महाकविरतिशेतुं न समर्थ इति तु निर्विवादम् अतएव ध्वनिदर्शनप्रतिष्ठापक आनन्दवर्द्धनाचार्यः समुद्घोषयति—'अस्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा एव वा महाकवयः।' अस्मिन् समुद्घोषे कालिदासादनन्तरं को द्वितीयः कविर् महाकविरिति निश्चेतुं प्रयत्नः कृतः। किरातार्जुनीयञ्च रघुवंशमहाकाव्यादनन्तरं द्वितीयं महाकाव्यमिति स्वभावतः सिद्धम्।

वंशस्थवृत्तेन प्रारब्धे किरातमहाकाव्ये वृत्तान्तराण्यपि यथाप्रसङ्गं यथास्थानं च विनियोजितानि यतो महाकाव्यस्यात्र शोभासम्पत्तिः समुन्मीलिता। महाकाव्यमिदं विविधैर् विचाररमणीयैः प्रकरणैः सन्दृब्धमिति नातितिरोहितम्। रसभावादिवैविध्यं विशेषतः सहृदयहृदयं समाकर्षति। किरातकाव्यस्य प्रधानो रसो धर्मयुद्धवीरो नवया प्रणाल्या प्रवाहित इत्यपि यथासामर्थ्यं स्पष्टीक्रियते। एतत्सर्वं मनसिकृत्य ग्रन्थेऽत्र भारवेः प्रतिभाविशेषः तत्तद्विषयविनियोजनवैविध्यञ्च स्पष्टं प्रतिपाद्यते। विदुषां भारविप्रणयिनां करकमलयोः समर्पितोऽयं ग्रन्थः तान् प्रीणयिष्यतीति निश्चिन्वन् विरमामि विस्तरादिति शम्।

सत्यव्रतसिंहः

# अनुक्रमणिका

# भारविमधिकृत्य

## भारविकृतमहाकाव्यस्य 'किरातार्जुनीय' मिति नामकरणौचित्यचारुत्वम्

महाकविर्भारविः किरातार्जुनीयं नाम महाकाव्यं रचयामास। किराता-र्जुनावधिकृत्य कृतो ग्रन्थः किरातार्जुनीयमिति। 'किरातार्जुनीयमिति शब्दः 'शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः' इति पाणिनीयेन (अष्टाध्यायी ४. ३. ८८) सूत्रेण किरातार्जुनीयमिति द्वन्द्वाच्छप्रत्यये कृते सिद्धः। अर्जुनोऽत्र नायकः, किरातश्च प्रतिनायकः तौ द्वावधिकृत्य रचितं महाकाव्यं किराता-र्जुनीयमित्यर्थवतीं संज्ञां लभते। किरातार्जुनीयस्य महाकाव्यस्य घण्टापथेति समाख्यां व्याख्यां विरचितवद्भिर्महामहोपाध्यायैः कोलाचलमल्लिनाथसूरिभिरत एव प्रथमसर्गव्याख्यासमाप्तौ सुष्ठूक्तम्—

'नेता मध्यमपाण्डवो भगवतो नारायणस्यांशजः
तस्योत्कर्षकृते त्ववर्ण्यततरां दिव्यः किरातः पुनः।
शृङ्गारादिरसोऽङ्गमत्र विजयी वीरः प्रधानो रसः
शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलम्॥'

किरातार्जुनीयं खलु सर्गबन्धो रसप्रबन्धः। सर्गबन्धो रसबन्ध एव महा-काव्यमिति नामान्तरं बिभर्ति। अतः सिद्धमेतद् यद्रससमाहितचेतस्क एव कश्चन कविः महाकाव्यं प्रणेतुं प्रभवति न सर्वः। एतादृशः कविः लोकप्रयुक्तै-

स्तैरेव शब्दैस्तैरेव चार्थैः स्वकीयया नवनवोन्मेषशालिन्या प्रतिभया किञ्चिन्नवमेव रमणीयं सर्गबन्धं निबध्नाति। एतादृश एव सर्गबन्धो रस-प्रबन्धो ध्वनिदर्शनकृता महामाहेश्वरेणानन्दवर्धनाचार्येण तत्काव्यदर्शनसमु-पबृंहणकृता च महामाहेश्वरेणाभिनवगुप्तपादाचार्येण सहृदयाह्लादं स्तुतो यथा हि ध्वन्यालोकस्य प्रथमोद्योते षट्संख्याके श्लोके तद्व्याख्यायाश्च निम्नोद्धृते-नोद्धरणेन परिज्ञायते—

'सरस्वती स्वादु तदर्थवस्तु
निःष्यन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति
परिस्फुरन्तं प्रतिभाविशेषम्।'

"सरस्वतीति वाग्रूपा भगवतीत्यर्थः। वस्तुशब्देनार्थशब्दं तत्त्वशब्देन च वस्तुशब्दं व्याचष्टे—निःष्यन्दमानेति। दिव्यमानन्दरसं स्वयमेव प्रस्नुवानेत्यर्थः यदाह भट्टनायकः—

'वाग्धेनुर्दुग्ध एतं हि रसं यद्बालतृष्णया।
तेन नास्य समः स स्याद् दुह्यते योगिभिर्हि यः॥'

अभिव्यनक्ति परिस्फुरन्तमिति। प्रतिपत्तृन् प्रति सा नानुमीयमाना, अपितु तदा-वेशेन भासमानेत्यर्थः। यदुक्तमस्मदुपाध्यायेन भट्टतौतेन—'नायकस्य कवेः श्रोतुः समानोऽनुभवस्ततः' इति। प्रतिभा अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा; तस्या विशेषो रसावेशवैशद्यसौन्दर्यं काव्यनिर्माणक्षमत्वम्। येनेति अभिव्यक्तेन प्रतिभा-विशेषेण निमित्तेन महाकवित्वगणनेति यावत्।"

एतत्तात्पर्यं त्विदमेव यत् कालिदासप्रथमानां भारविद्वितीयानाञ्च कवीनां महाकवित्वं तेषामलोकसामान्येन तत्कृतरसप्रबन्धेषु प्रतिपदं प्रतिप्रक-रणञ्च परिस्फुरता प्रतिभाविशेषोऽभिव्यज्यते। अलोकसामान्यः प्रतिभाविशेषः सहृदयैः काव्यरसिकैर्नानुमीयते, अपितु महाकविकृतकाव्यविशेषरसाविष्ट-चेतोभिस्तैस्तन्मयीभवनयुक्त्या हृदयेनानुभूयते।

अतः सिद्धमिदं यद् भारवेर्महाकवित्वं तत्कृतकिरातार्जुनीयस्य च महा-काव्यत्वं सहृदयानां भावयित्र्या प्रतिभयैव प्रमाणीक्रियते। न कयाचनाऽपि युक्त्या तर्कणया वा सहृदयानां भावयित्री प्रतिभाऽन्यथयितुं शक्या।

एवं स्थिते किरातार्जुनीयमिति भारवेर्महाकाव्यं स्वनाममाहात्म्यादेव प्रबन्धान्तर्व्यापिनं वीरं रसं प्रत्यभिज्ञापयितुमलम् । भट-प्रतिभटयोरर्जुनशङ्करयोः परस्परं विजयस्पर्द्धि यद् द्वन्द्वयुद्धं नाम संविधानं तदस्य महाकाव्यस्य नाम्नः सार्थक्यं समीचीनमभिज्ञापयति । एतर्हि प्रसङ्गे काव्याचार्येण वक्रोक्ति-सिद्धान्तप्रतिष्ठापनाचार्येण कुन्तकाचार्येण रसप्रबन्धेषु वर्ण-पद-वाक्य-प्रकरणानां वक्रतां युक्तियुक्तं निरूप्य या प्रबन्धवक्रता निरूपिता तत्र प्रबन्धनामकरण-स्यापि वक्रता विच्छित्तिर्वा सहजाहार्यसौन्दर्यापरपर्याया निम्नाङ्कितया वक्रोक्तिजीवितचतुर्थोन्मेषवर्तिन्या चतुर्विंशतितमया सवृत्तिकया कारिकयैवं निरूपिता—

'आस्तां वस्तुषु वैदग्ध्यं काव्ये कामपि वक्रताम् ।
प्रधानसंविधानाङ्कनाम्नाऽपि कुरुते कविः ॥'

आस्तां वस्तुषु वैदग्ध्यम्—आस्तां दूरत एव वर्तताम् । वस्तुषु अभिधेयेषु प्रकर-णेषु प्रतिपाद्येषु वैदग्ध्यं विच्छित्तिः । काव्ये कामपि वक्रतां कुरुते कविः—काव्ये नाटके सर्गबन्धादौ कामपि वक्रतां कुरुते विदधाति कविरित्यद्भुतप्रतिभाप्रसार-प्रकाशः । केन संविधानाङ्कनाम्नाऽपि । प्रधानप्रबन्धप्राणगतप्रायं यत् संविधानं कथायोजनं तदङ्कश्चिह्नमुपलक्षणं यस्य तत्तथोक्तं तच्च तन्नाम । अपि शब्दो विस्मयमुद्योतयति । यथा अभिज्ञानशाकुन्तल-मुद्राराक्षस-प्रतिमानिरुद्ध-मायापुष्पक-कृत्यारावण-छलितराम-पुष्पदूषितकादीनि । न पुनर्हयग्रीववध-शिशुपालवध-पाण्डवाभ्युदय-रामानन्द-रामचरितप्रायाणि ।'

अत्र किरातार्जुनीये सर्गबन्धे सप्तदशाष्टादशसर्गयोः भारविणा गाण्डीव-सुहृदः पाण्डुनन्दनस्याऽर्जुनस्य शिवरूपिकिरातराजसंप्रहरणात् समुन्मीलितानुपम-विक्रमस्य वर्णनप्रसङ्गे रसभावौचित्यचारव इमे श्लोका विरचिताः—

'अथ उदग्र इव द्विरदे मुनौ
रणमुपेयुषि भीमभुजायुधे ।
धनुरपास्य सबाणधि शङ्करः
प्रतिजघान घनैरिव मुष्टिभिः ॥१८. १॥

हरपृथासुतयोर्ध्वनिरुत्पतन्—
—नमृदुसंवलिताङ्गुलिपाणिजः ।

नामकरणं कृतमिति । इत्थं स्थिते ध्वनिदृशा वक्रोक्तिदृशा च निकामं महाकाव्यौचित्यचार्वेव किरातार्जुनीयमित्यभिधानं भारविकाव्यस्येति सिद्धम् ।

## किरातकाव्यारम्भप्रेरणा

महाकवेर्भारवेः किरातार्जुनीयस्य संस्कृतोत्थमहाकाव्येषु रमणीयनवनिर्माणस्याऽऽदिम आरम्भमङ्गलश्लोक एवंवर्णकः—

श्रियः कुरूणामधिपस्य पालनीं
प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितः समाययौ
युधिष्ठिरं द्वैतवने वनेचरः ॥

श्लोकोऽयं श्रीमन्महाभारतस्य वनपर्वणो निम्नाङ्कितानां श्लोकानां (२३.९, ११, १२) वर्णमाधुरीणां मुहुर्मुहुः स्मरता तद्गतरसभावसमाहितचेतसा महाकविना निर्मित इति प्रतिभाति । वनपर्वगताः श्लोका इमे—

'वरः कुरूणामधिपः प्रजानां
पितेव पुत्रानपहाय चाऽस्मान् ।
पौरानिमान् जानपदांश्च सर्वान्
हित्वा प्रयातः क्व नु धर्मराजः ॥

स्वयं निवेश्याऽप्रतिमं महात्मा
पुरं महादेवपुरप्रकाशम् ।
शतक्रतुप्रस्थममेयकर्मा
हित्वा प्रयातः क्व नु धर्मराजः ॥

चकार यामप्रतिमां महात्मा
सभां मयो देवसभाप्रकाशाम् ।
तां देवगुप्तामिव देवमायां
हित्वा प्रयातः क्व नु धर्मराजः ॥

महर्षेर्व्यासमहाकवेः श्लोका इमे रसभावानुसारि किञ्चिद्वर्णसंगीतसौभाग्यं सहृदयहृदयानुरञ्जकं सहृदयहृदयानुभाव्यञ्च बिभ्रतीति तु निर्विचिकित्सम्। अत्र 'वरः कुरूणा'मिति पदयोर्मधुरध्वनिः 'श्रियः कुरूणा' मिति किरातश्लोकस्थयोः पदयोरनुध्वनतीति किरातकाव्यस्य रसिका एव प्रमाणम्। महाभारतपद्ये 'वरः कुरूणामित्यत्र या पठितिमाधुरी सा खलूपजातिवृत्तारम्भिका किन्तु 'श्रियः कुरूणा' मिति किरातकाव्यस्य मौले पद्ये या पठितिमाधुरी सा वंशस्थवृत्तारम्भिका। अतः भारवेः काव्यारम्भे नानुकारदोषो न वा हरणदोषः श्रुतिमधुरवर्णविन्यासस्येति निश्चप्रचम्।

समस्तोऽयं किरातार्जुनीयमहाकाव्यस्य प्राथमिकः सर्गः वंशस्थवृत्तेन निबद्धः सर्गसमापकपद्यद्वयं विहाय, यत्र 'न समयपरिरक्षणं क्षमं ते' इत्यादि प्रथमं (१.४५) पद्यं पुष्पिताग्रावृत्तेन निबद्ध्यते द्वितीयं (१.४६) पद्यं च मालिनीवृत्तेनेति। वंशस्थवृत्तं द्वादशाक्षरमुपेन्द्रवज्राद्युपजातिवृत्तं त्वेकादशाक्षरम्। यथोक्तं तत्तत्काव्यकर्त्रा तत्तत्काव्यशास्त्रप्रणेत्रा च काश्मीरिकेण महाकविना क्षेमेन्द्रेण स्वरचिते सुवृत्ततिलके (१.२६) श्लोकः—

'संलक्षितं जतजरैर्द्वादशाक्षरमक्षरैः।
छन्दोविचक्षणा वृत्तं वंशस्थाख्यं प्रचक्षते।'

तथा च तत्रत्ये (१.१६) श्लोके—

'जतजैर्गुरुयुग्मेन संसक्तैरुपलक्षितम्।
वदन्त्युपेन्द्रवज्राख्यं वृत्तमेकादशाक्षरम्॥

परस्परमक्षरसंख्याभेदतो भिन्नयोरपि वृत्तयोरनयोः 'वरः कुरूणा' मित्यत्र या काचिन्मनोहारिणी पठितिमाधुरी तया 'श्रियः कुरूणा'—मित्यत्रत्या पठितिमाधुरी संवदन्त्येव श्रुतिगोचरीभवति न विसंवदन्तीति। उपजातिवृत्तबद्धस्य महाभारतश्लोकस्य श्रुतिमाधुर्येण पठितिसौभाग्येन वा मोमुह्यमानमनाः महाकविर्भारविः किरातकाव्यमारब्धुकामो वंशस्थवृत्तेऽपि तत्सदृशीं तत्सधर्मिणीमेव वा श्रुतिमाधुरीं संक्रामयितुं प्रभवतीति भारवेः कविप्रतिभायाः काव्यशक्तेर्वा प्रथमः स्पन्द इति समनस्कारं मान्य एव सुधियां सहृदयानामिति।

## किरातकाव्ये वृत्तयोजनायां वंशस्थवृत्तविनियोजनवैदग्ध्यम्

वंशस्थवृत्तप्रियो भारविः । वृत्तान्तरविरचनाकुशलस्याऽपि तस्य वंशस्थवृत्तप्रणयिता सहृदयानां कवीनां काव्यज्ञानाञ्च सुविदितैव । तथा हि, अष्टादशसर्गात्मके किरातार्जुनीयमहाकाव्ये यथा प्रथमः सर्गः वंशस्थवृत्तेन निबद्धस्तथाऽन्तिमोऽपि सर्गस्तेनैव वृत्तेन विनिर्मितः । अन्यदपि चतुर्थाष्टमचतुर्दशात्मकं सर्गत्रयं वंशस्थवृत्तस्यैव विलसितम् । वंशस्थवृत्तस्य लक्षणमनुसृत्य वंशस्थवृत्तरचना नाऽतिदुष्करा । किन्तु नायं भारविसदृशानां महाकवीनां पन्थाः । महाकवेर्भारवेर्वंशस्थवृत्तबन्धाः सहृदयहृदयहारिणः कामपि कमनीयां काव्यकान्ति समुद्योतयन्ति । काश्मीरिकेण काव्यमर्मज्ञेन काव्यशास्त्रनिर्माणनिपुणेन महाकविना क्षेमेन्द्रेण, मन्ये, भारवेरेव वंशस्थवृत्तवैचित्रीं हृदयङ्गमीकृत्य स्वरचितस्य सुवृत्ततिलकस्य द्वितीये विन्यासे सप्तदशसंख्याके श्लोके वंशस्थवृत्तस्य काव्यौपयिकं निर्माणकौशलमेवमुट्टङ्कितम्—

'असमस्तपदैः पादसन्धिविच्छेदसुन्दरम् ।
सर्वपादैर्विसर्गान्तैर्वंशस्थं यात्यनर्घताम् ॥

अर्थाद् वंशस्थवृत्तं तु यथेच्छं यथाशक्ति कोऽपि निर्मातुं समर्थः, किन्तु यादृशं वंशस्थवृत्तमसमस्तपदात्मकं पादसन्धिविच्छेदसुन्दरं विसर्गान्तपादं च भवत् कामपि काव्यौचितीं बिभर्ति तादृशं विरला एव काव्यशक्तिसम्पन्नाः कर्तुमलम् । परःसहस्रैः कविभिर्वंशस्थवृत्तं विरचितम्, किन्तु भारवेरेव वंशस्थवृत्तं कीर्णकर्णामृतं सहृदयहृदयाह्लादकञ्च संजातम् । अप्रतिमकविप्रतिभावैभवभृता कादम्बरीकृता महाकविना बाणभट्टेन कादम्बर्या आमुखे विरचितं निम्नाङ्कितं वंशस्थवृत्तं दृश्यते—

नमामि भर्वोश्चरणाम्बुजद्वयं
सशेखरैमौखरिभिः कृतार्चनम् ।
समस्तसामन्तकिरीटवेदिका—
विटङ्कपीठोल्लुठितारुणाङ्गुलि ॥

लक्षणतो निर्दुष्टमपि बाणस्य 'नमामी' त्यादिवंशस्थवृत्तविरचनं न रोचते सहृदयेभ्यः । यतोहि वंशस्थवृत्तलक्षणलक्षितेऽत्र श्लोके श्रव्यतायाः श्रुतिमधुरतायाः कोऽप्यनुभवो न कर्णयोरमृतं निपिञ्चति न वा हृदयं हरति

सहृदयानाम् । किन्तु भारवेर्वंशस्थवृत्तबन्धे श्रव्यतागुणस्य श्रुतिमाधुर्यवैशिष्ट्यस्य वा सर्वत्रैवाऽनुभवो भवतीति सहृदया एव प्रमाणम् । तथाहि दृश्यतां प्रथमसर्गस्य मौल एव श्लोके श्रव्यतागुणस्य गरीयस्त्वम्—

श्रियः कुरूणामधिपस्य पालनीं
प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितः समाययौ
युधिष्ठिरं द्वैतवने वनेचरः ॥

अथवा तदनन्तरवर्तिनि श्लोकेऽधोलिखिते—

'कृतप्रणामस्य महीं महीभुजे
जितां सपत्नेन निवेदयिष्यतः ।
न विव्यथे तस्य मनो न हि प्रियं
प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥

अथवा तदीय एव निम्नाङ्किते तृतीयश्लोके—

द्विषां विघाताय विधातुमिच्छतो
रहस्यनुज्ञामधिगम्य भूभृतः ।
स सौष्ठवौदार्यविशेषशालिनीं
विनिश्चितार्थामिति वाचमाददे ॥

एवमेव चतुर्दशसर्गस्य प्रथमश्लोके वंशस्थवृत्तबन्धे श्रव्यताया कर्णामृतोत्सभूताया अनुभूयतां माधुर्यसौन्दर्यवैभवम्—

'ततः किरातस्य वचोभिरुद्धतैः
पराहतः शैल इवार्णवाम्बुभिः ।
जहौ न धैर्यं कुपितोऽपि पाण्डवः
सुदुर्ग्रहान्तःकरणा हि साधवः ॥'

भारवेर्वंशस्थवृत्तबन्धेषु श्रव्यता कुत आयातीति चिन्तायामसमस्तपदतायाः, अल्पसमस्तपदतायाः, पदसन्धिविच्छेदरम्यतायाः, विसर्गान्तपदप्रयोगविदग्धतायाश्च वैशिष्ट्यं सुस्पष्टमेव विभावयन्ति सुधियस्सचेतसः ।

भारवेर्वंशस्थवृत्तबन्धस्य संतायमानं श्रव्यवर्णध्वनिमनुहुङ्कुर्वाणेन महाकविना माघेनाऽपि स्वरचितशिशुपालवधमहाकाव्ये वंशस्थवृत्तेनैव मङ्गलारम्भः क्रियते । अत्र प्रथम एव श्लोकबन्धो दृष्टान्तरूपेणोद्ध्रियते—

श्रियः पतिः श्रीमति शासितुं जगज्—
जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शाऽवतरन्तमम्बरा—
द्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥'

यथा किरातार्जुनीयमहाकाव्यस्यादिमे 'श्रियः कुरूणा'-मित्यादि-श्लोके चतुर्थपादो विसर्गान्तिस्तथैवाऽत्रापि 'श्रियः पति रित्यादिश्लोके चतुर्थपादो विसर्गान्त एव निबद्धः शिशुपालवधमहाकाव्यस्य बहुषु श्लोकेषु विसर्गान्तपादबन्धस्वरूपः श्रव्यतागुणो दरीदृश्यते । किन्तु सन्ति तादृशा अप्यपवादाः शिशुपालवधे श्रव्यतागुणस्यैतादृशस्य यैः वंशस्थवृत्तवैचित्री समुत्सार्यमाणेव संलक्ष्यते । यथा हि प्रथमस्यैव सर्गस्याऽष्टमे श्लोके—

निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा
लसद्बिसच्छेदसिताङ्गसङ्गिना ।
चकासतं चारुचमूरुचर्मणा
कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥'

यथा वाऽस्यैव सर्गस्य षष्टिसंख्याके श्लोके—

'विदग्धलीलोचितदन्तपत्रिका—
चिकीर्षया नूनमनेन मानिना ।
न जातु वैनायकमेकमुद्धृतं
विषाणमद्याऽपि पुनः प्ररोहति ॥''

उपर्युद्धृतयोर्द्वयोरपि वंशस्थवृत्तबद्धयोश्श्लोकयोः समस्तपदसंघटनाबाहुल्यं विसर्गान्तपादराहित्यञ्च प्रस्पष्टं प्रविलोक्यते यतो नात्र वंशस्थवृत्तमनर्घतामाप्नुवत् कर्णयोरमृतं निषिञ्चदनुभूयते ।

महाकविर्भारविः रसानुसारेण वर्णनानुगुण्याच्च वंशस्थवृत्तस्य स्वकाव्ये विनियोगं विधत्ते । किरातार्जुनीयं नाम महाकाव्यं धर्मवीररसनिष्यन्दित्वात्

षाड्गुण्यप्रधानमिति समाकलय्य सुष्ठूक्तं काव्येषु वृत्तविनियोगविदा महाकविना क्षेमेन्द्रेण सुवृत्ततिलके तृतीयविन्यासेऽष्टादशसंख्याके श्लोके —

'षाड्गुण्यप्रगुणा नीतिर्वंशस्थेन विराजते' इति ।

वंशस्थवृत्तविनियोजनस्याऽनेन मानदण्डेन किरातार्जुनीयनिबद्धानां वंशस्थवृत्तानामनर्घता सुतरां विचाररुचिरा प्रतिभाति । भारवेः किरातार्जुनीये वंशस्थवृत्तस्यौचित्यचारुत्वं सुविचिन्त्य सुवृत्ततिलके तृतीयविन्यासस्यैकत्रिंशे श्लोके निम्नाङ्किते यदुक्तं क्षेमेन्द्रेण तत्सहृदयं सम्यगावर्जयति—

'वृत्तच्छत्रस्य सा कापि वंशस्थस्य विचित्रता ।
प्रतिभा भारवेर्येन सच्छायेनाधिकीकृता ।।'

एतदीयं तात्पर्यमिदं यत् किरातार्जुनीयं नाम भारवेः कविप्रतिभाप्रसूतं महाकाव्यं वंशस्थवृत्तविनियोगवैचित्र्येण निकामं किञ्चिदनुभवगम्यं रामणीयकं बिभर्ति । वस्तुतः किरातार्जुनीयमहाकाव्यौचित्यचतुरस्रं वंशस्थवृत्तविनियोजनं भारवेः कविप्रतिभावैभवं सत्यापयति । अथ च समधिष्ठितकाव्यराजसिंहासनं किरातार्जुनीयमहाकाव्यं समुपासमानाः काव्यरसिकास्सहृदयाः वंशस्थवृत्तरूपे तच्छिरसि समुच्छ्रिते सच्छाये छत्रे सादरं निपक्तभावनादृष्टयो नतेन शिरसा भारवेः पुरुषार्थचतुष्टयशासनं शब्दसौष्ठवशोभि गुर्वर्थगर्भञ्च सोल्लासं सोत्साहञ्च सम्मानयन्तीति निर्विवादम् ।

## किरातकाव्ये मालिनीवृत्तबन्धवैशिष्ट्यम्

चतुश्चत्वारिंशानि निर्दोषाणि गुणवन्ति मौक्तिकानीव महार्घाणि वंशस्थवृत्तानि विरचय्य महाकविर्भारविर्वर्ण्यवस्त्ववस्थासदृशाभ्यां पुष्पिताग्रामालत्यभिधानाभ्यां वृत्ताभ्यां प्रथमं सर्गं समाप्तिमानयति । तत्र अपरवक्त्रनामकवृत्तभेदस्य पञ्चविंशाक्षरप्रमितस्य पुष्पिताग्रावृत्तस्य नामान्तरं वैतालीयमिति छन्दःशास्त्रविद्भिराम्नातम् । प्रथमतृतीयपादयोर्द्वादशवर्णवतः द्वितीयचतुर्थपादयोश्च त्रयोदशवर्णवतः पुष्पिताग्रावृत्तस्य, 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणमपि तैरेव साधु निरूपितम् । किरातकाव्ये प्रथमसर्गस्य पञ्चचत्वारिंशः श्लोकः पुष्पिताग्रावृत्तनिबद्धोऽध उल्लिख्यते—

'न समयपरिरक्षणं क्षमं ते
निकृतिपरेषु परेषु भूरिधाम्नः ।
अरिषु हि विजयार्थिनः क्षितीशा
विदधति सोपधि सन्धिदूषणानि ।।'

शत्रुविजयमहारम्भे कालातिपातं सोढुमशक्नुवन्त्याः द्रौपद्याः वचनमिदं भारविणा द्रुतवेगवर्णलयमयेन पुष्पिताग्रावृत्तेन यन्निबद्धं तच्छस्तस्य तस्य वृत्तशासनसामर्थ्यं सुतरामभिव्यनक्ति, महाकाव्ये च वृत्तविनियोजनेन रसभावावेशानुगुणेनैव भाव्यमित्यपि स एव तत्समयान्तःपातिनः तदुत्तरकालवर्तिनश्च कवीन् निपुणं शास्तीति निर्विचिकित्सम् ।

प्रथमसर्गस्य पार्यन्तिकः श्लोकः मालिनीवृत्तेन बद्धो निम्नलिखितः कामपि काव्यविच्छित्तिं बिभर्ति—

'विधिसमयनियोगाद्दीप्तिसंहारजिह्मं
शिथिलवसुमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरमुदस्योदीयमानं दिनादौ
दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ।।'

युधिष्ठिरं शुभाशंसनेन शुभाशीर्वचनरचनेन संप्रसादयितुं द्रौपद्या एवोक्तिरियं कविना नगणद्वयमगणयगणद्वयसंभृतेन प्रतिपादमष्टाक्षरविरामरमणीयेन मालिनीवृत्तेन यदुपनिबध्यते तत्रास्ति कालिदासस्य कविकुलगुरोः प्रभावः सत्कविसंभाव्यः। दृश्यतां कुमारसंभवस्य प्रथमसर्गान्ते कालिदासस्य मालिनीवृत्तसौन्दर्यम्—

'अवचितबलिपुष्पा वेदिसम्मार्गदक्षा
नियमविधिजलानां बर्हिषां चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ।।'

कालिदासीयमेव मालिनीवृत्तसौन्दर्यं भारवेः किरातकाव्यप्रथमसर्गान्तवर्तिनि मालिनीवृत्तबन्धे सुस्पष्टं सहृदयानां भावनादृशा दर्शनीयतामृच्छति ।

यथा कालिदासीयं कुमारसंभवसर्गान्तर्वर्ति मालिनीवृत्तं द्रुततालयुक्तं मधुरमधुरं श्रुतिगोचरीभवति तथैव भारवेरपि किरातार्जुनीयप्रथमसर्गान्ते तादृशवैशिष्ट्यवदेव मालितीवृत्तं विलोक्यते। मालिनीवृत्तविरचनमधिकृत्य क्षेमेन्द्रेण सुवृत्ततिलके द्वितीयविन्यासे द्वाविंशे श्लोके सुष्ठ्वेवमुक्तम्—

'विसर्गहीनपर्यन्ता मालिनी न विराजते ।
चमरी छिन्नपुच्छेव वल्ली वाऽऽलूनपल्लवा ।।

अर्थात् यथा छिन्नपुच्छा चमरी, आलूनपल्लवा वा वल्ली न कामपि शोभां बिभर्ति तथैव पर्यन्तविसर्गविरहिता मालिन्यपि निःशोभैव प्रतिभाति। किन्तु कालिदासस्य सर्गान्तमालिनीवद् भारवेरपि सर्गान्तमालिनी पर्यन्तविसर्गवती सुतरां शोभमानैव विराजते ।

बहवो हि वीणावादका वीणां यथाशास्त्रं वादयन्ति किन्तु तेषु कश्चिदेवैतादृशो भवति यस्य वीणानिर्गताः स्वराः सरसाः सुमधुराः सहृदयहृदयहारिणश्च भवन्ति। एवमेव बहवः खलु कवयः काव्येषु मालिनीवृत्तं निबध्नन्ति, किन्तु कश्चिदेव कविस्तादृशो भवति यस्य मालिनीवृत्तमाधुर्यं रसपरिवाहि श्रुतिसुखदं चेतश्चमत्कारकारि च संपद्यते। कालिदासोऽत्राऽपि महाकवीनां प्रथमः। द्वितीयः क इति चिन्तायां भारवेरेव नाम स्मर्तुं निर्देष्टुं चाऽर्हम्। यद्यपि महाकविना माघेन शताधिकानि मालिनीवृत्तानि विरचितानि, मधुराण्यपि च तानि रसवन्ति च, किन्तु यत्र कुत्रचन माघकृते मालिनीवृत्तविन्यासे वैस्वर्यमपि विस्पष्टं कर्णयोः प्रविशत्प्रतिभाति। यथा खलु निम्नाङ्किते शिशुपालवधमहाकाव्यस्यैकादशसर्गान्तर्गते एकचत्वारिंशत्तमे श्लोके—

'प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यै-
र्हुतमयमुपलीढे साधु सान्नाय्यमग्निः ।।'

अत्र 'प्रतिशेति, विधिवीति, 'कृतग्विति, 'हुतमेति' प्रतिपादं श्रोत्रग्राह्यो विस्वरो लक्षणतो गुरुलघ्वादिनियमादविभ्रष्टेऽपि मालिनीवृत्ते दोषायैव कल्पते न गुणायेति। वृत्तेषु श्रव्यतागुणस्य प्रत्यभिज्ञानप्रवीणेन क्षेमेन्द्रेणात एवोक्तं सुवृत्ततिलके द्वितीयविन्यासे चतुर्विंशतिसंख्याके श्लोके—

'अज्ञोऽप्यलक्ष्यं मालिन्यां वीणायामिव विस्वरम् ।
श्रुत्वैवोद्वेगमायाति वाचा वक्तुं न वेत्ति तम् ।।'

एवमेवास्यैव मालिनीवृत्तविलाससंभृतस्यैकादशसर्गस्योनचत्वारिंशत्तमे श्लोकेऽधोलिखितेऽपि वैस्वर्यमेव श्रुतिगोचरीभवति । तद् यथा—

'बहु जगद पुरस्तात्तस्य मत्ता किलाऽहं
चकर च किल चाटु प्रौढयोषिद्वदस्य ।
विदितमिति सखीभ्यो रात्रिवृत्तं विचिन्त्य
व्यपगतमदया ऽ ह्नि व्रीडितं मुग्धवध्वा ।।'

अत्र 'जगद'—'चकरेति पदद्वयप्रयोगतो माघमहाकवेः व्याकरणशास्त्र-पाण्डित्यं प्रकामं प्रकाशितम्, किन्तु मालिन्याः श्रुतिसौभाग्यं दूरमपसारित-मेव विभाव्यते । माघात् पुरातनैः महाकविभिः मालिनीवृत्तं सर्गसमाप्तौ विरचितं यथा महाकविना कालिदासेन यथा वा महाकविना भारविणा, किन्तु महाकविनाऽनेन पुरातनीमिमां महाकविमर्यादामविगणय्य समस्तोऽप्येकादशसर्गः मालिनीवृत्तेनैव विनिबद्धः । काव्याचार्येण क्षेमेन्द्रेण सुवृत्ततिलकस्य तृतीय-विन्यासस्योनविंशे श्लोकार्द्धे मालिनीवृत्तविनियोगस्य प्राचीना महाकविपद्धति-रेव प्रकाश्यते 'कुर्यात् सर्गस्य पर्यन्ते मालिनीं द्रुततालवत् ।' इति यद्भवतु तद्भवतु, माघमहाकवेः सहृदयाः सामाजिका उच्छृङ्खलाः कवयो भवन्तीति मत्वा प्रकामं माघस्य पुरातनपरम्परापरित्यागं समादधतु किन्तु 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति माघमहाकवेः स्वयंकृत एव रम्यतामानदण्डस्त्रुटित एवात्र लुठन् दृश्यते ।

अन्यच्च श्रृङ्गारालम्बनोदारनायिकाहेवाकस्य वसन्तादेः रात्रिप्रभा-तादेर्वा वर्णनं यथोपजातिवृत्तभेदैस्सच्छायं संजायते न तथा मालिनीवृत्तबन्धेन । नियममनुसरद्भिर्महाकविभिरुपजातय एवैतादृशेषु प्रसङ्गेषु विनियुक्ताः । यथा महाकविना कालिदासेन कुमारसंभवमहाकाव्यस्य प्रथमसर्गे द्वात्रिंशे श्लोक उमाया रूपसौन्दर्यवर्णनावसरे—

'उन्मीलितं तूलिकयेव चित्रं
सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि
वपुर्विभक्तं नवयौवनेन' ।। इत्यादिश्लोकसन्दर्भे ।

यथा वा महाकविना भारविणा किरातार्जुनीयमहाकाव्यस्य चतुर्थसर्गे शरद्वर्णनप्रसङ्गे नवमे श्लोके—

'कपोलसंश्लेषि विलोचनत्विषा
विभूषयन्तीमवतंसकोत्पलम् ।
सुतेन पाण्डोः कलमस्य गोपिकां
निरीक्ष्य मेने शरदः कृतार्थताम् ।' इत्यादि

पद्यसंघाते ।

माघमहाकविनाऽप्युपजातिवृत्तभेदाः शिशुपालवधे निबद्धाः यथा खलु शिशुपालवधमहाकाव्यस्य तृतीयः सर्ग उपजातिवृत्तेनैव विरचितः, किन्तु भारविकालिदासयोः पद्धतिमपहाय प्रसङ्गान्तरे वृत्तस्यास्य विनियोगः कृतो यथा खलु श्रीकृष्णस्येन्द्रप्रस्थप्रस्थाने सबलवाहनवर्णनावसरे तृतीयसर्गवर्तिन्यष्टादशसर्गे—

'विरोधिनां विग्रहभेददक्षा
मूर्तेव शक्तिः क्वचिदस्खलन्ती ।
नित्यं हरेः संनिहिता निकामं
कौमोदकी मोदयति स्म चेतः ।।' इत्यादि पद्यसमुच्चये ।

अत्र भवितव्यं माघकृते मार्गान्तरपरिग्रहे कारणेन केनचित्, किन्तु प्राचीनमहाकविमार्गपरित्यागस्तु प्रस्पष्ट एव । क्षेमेन्द्रेण सुवृत्ततिलकस्य तृतीयविन्यासे सप्तदशतमे श्लोके वृत्तविनियोजने प्राचीनमहाकविमार्ग एवं प्रदर्शितः—

'शृङ्गारालम्बनोदारनायिकारूपवर्णनम् ।
वसन्तादि तदङ्गञ्च सच्छायमुपजातिभिः ।।

महाकवेर्माघस्य मार्गस्त्वन्य एव । नवोऽयं मार्गो भवतु किन्तु विच्छायोऽयं मार्गो न सच्छायः । भारविर्महाकविः । कविकुलगुरोर्महाकवेः कालिदासस्य मार्गमनुसरतो भारवेः यत्र कुत्रचित् स्खलनं तत् कालविपर्ययदोषतः, तदानीन्तनकाव्यसामाजिकरुचिपरिवर्तनप्रभावतो वा भवतु न नव्यनिर्माणदुराग्रहावेशत इति तु निश्चितमेवेति ।

—०—

# किरातकाव्ये वृत्तान्तरविनियोगवैचित्र्यम्

वंशस्थवृत्तेन प्रारब्धे किरातकाव्ये महाकविना भारविणा कविकुलगुरोर्महाकवेः कालिदासस्य काव्यमार्गमनुसरता यानि वृत्तान्तराणि सर्गान्तरेषु विनियोजितानि तानि खल्विमानि—

(क) वियोगिनी-त्यपरनामधेयं वैतालीयं वृत्तम्, यथा द्वितीयसर्गे;

(ख) इन्द्रवज्रोपेन्द्रवज्रादिभेदभिन्नमुपजातिवृत्तम्, यथा तृतीय-षोडश-सप्तदशसंख्याकेषु सर्गेषु;

(ग) वंशस्थवृत्तम्, यथा चतुर्थे यथा वाऽष्टमे सर्गे;

(घ) प्रभा-रथोद्धताजलधरमाला-जलोद्धतगति - शालिनीवंशपत्रपतितेत्यादिवृत्तवैविध्यं यथा पञ्चमसर्गे;

(ङ) प्रमिताक्षरेत्यभिधानं वृत्तम्, यथा षष्ठसर्गे;

(च) प्रहर्षिणीत्याख्यं वृत्तम्, यथा सप्तमसर्गे;

(छ) स्वागतेत्युदितं वृत्तं यथा नवमसर्गे;

(ज) पुष्पिताग्रेतिनामकं वृत्तम्, यथा दशमसर्गे;

(झ) आनुष्टुभं वृत्तम्, यथैकादशे पञ्चदशे च सर्गे;

(ञ) उद्गतेत्युक्तं वृत्तम्, यथा द्वादशसर्गे;

(ट) औपच्छन्दसिकेत्यभिहितं वृत्तम्, यथा त्रयोदशसर्गे;
(ठ) द्रुतविलम्बितेतिनामकं वृत्तं यथा चतुर्दशसर्गे; अष्टादशसर्गे च;
(ड) तथा च—अपरवक्त्र – प्रमुदितवदना – मत्तमयूर – शिखरिणीत्याख्यानि वृत्तानि, पार्यन्तिकाष्टादशसंख्याके सर्ग इति ।

एवं वृत्तसङ्कलनायां कृतायां त्रिंशद्विधानि ततोऽपि समधिकानि वृत्तानि विनियोजितानि भारविणा स्वरचिते रसप्रबन्धे । वृत्तमेकं विनियुक्तं विहाय वृत्तान्तराणामुपादानं किङ्कारणकं किंप्रयोजनकञ्चेति विचारणीयं भवति ।

मन्ये, यथा तृषितः सम्पीतसुरससलिलः कोऽपि जनः स्वादिष्ठाय, सुगन्ध-मनोहराय, तुषारशीतलायाऽपि जलाय न स्पृहयति तथैव संजातकाव्यवृत्तरसतर्षः संपीतैकमधुरवृत्तरसः काव्यरसिकोऽपि मधुरमधुरं, हृदयाह्लाददायि रसप्रवाहि तदेवैकमधुरवृत्तरसं नैरन्तर्येणाऽऽस्वादयितुं न कामयते । यदि जगति मधुर एवैको रसः स्यात् तदा जनानां तत्र वैतृष्ण्यमेव संभवेत्, पिपासा च मृतप्रायैव स्यात् । अतएव रसान्तराण्यपि सृष्टानि सन्ति यान्यास्वाद्य मधुररसस्य मधुरिमा जन-हृदयान्याक्रष्टुं प्रभवति । अतएव महाकविकाव्येषु वृत्तविनियोगवैचित्र्यं मनसि निधाय सुष्ठूक्तं काश्मीरिकेण क्षेमेन्द्राचार्येण सुवृत्ततिलके—

प्रबन्धः सुतरां भाति यथास्थानं निवेशितैः ।
निर्दोषैः गुणसंयुक्तैः सुवृत्तैर्मौक्तिकैरिव ।।
काव्ये रसानुसारेण वर्णनानुगुणेन च ।
कुर्वीत सर्ववृत्तानां विनियोगं विभागवित् ।।[1]

प्रबन्धः खलु सारस्वतप्रसरश्चतुष्प्रकारो भवति । तत्र प्रकारचतुष्टये शास्त्रप्रबन्धः सर्वकाव्याङ्गलक्षणलक्षितः प्रथमः, काव्यप्रबन्धः विशिष्टशब्दार्थ-साहित्यसदलङ्कृतिस्वरूपो द्वितीयः शास्त्रकाव्यप्रबन्धश्चतुर्वर्गनिरूपणापरःतृतीयः, काव्यशास्त्रप्रबन्धश्च भट्टिकाव्यादिनिदर्शनश्चतुर्थ इति । महाकविभारवि-प्रतिभानिःस्यन्दः किरातार्जुनीयरूपः प्रबन्धः काव्यप्रबन्ध इति तत्र सुवृत्तानां रसभावानुसरणपरत्वाद् वर्णनानुगुणत्वाच्च यथास्थानविनिवेशित्वं नितरामा-वश्यकमिति निःसंदिग्धम् । किरातकाव्यस्य प्रथमसर्गे विनियुक्तस्य वंशस्थवृत्तस्य रसभावानुसारित्वाद् वर्णनानुकूल्याच्च यथास्थानविनिवेशवैशिष्ट्यं प्रसाधित-प्रायमेव । द्वितीयसर्गे विनियुक्तं यद् वियोगिनीत्यपरपर्यायं वैतालीयं वृत्तं

१. सुवृत्त० ३.१,७

तस्यौचित्यचारुत्वविचारः प्राप्तावसरः । मन्ये, वृत्तमिदं महाकवेः कालिदासस्य रघुवंशमहाकाव्ये यथास्थानं विनियुक्तं दृश्यते—

यदुदाहरणं निम्नाङ्कितः श्लोकः—

गृहिणी सचिवः सखी प्रिया
प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम् ।[1]

अत्र श्लोके महाराजस्याजस्य मृतायाः प्रियायाः सहधर्मचारिण्या इन्दुमत्याः कृते यः शोकस्स निरर्गलं प्रवहमानो दृश्यते । निरर्गलः शोकप्रवाहः कुत इति चेद् वियोगिनीत्यपरनामधेयवैतालीयवृत्तप्रणालिकाप्रभावादिति ब्रूमः ।

महाकविकालिदासप्रतिभाप्रभावितया वैतालीयवृत्तप्रणालिकया प्रवहमानेन शोकभावेन भावितान्तर्हृदयो भारविः किरातकाव्यस्य द्वितीयं सर्गं वैतालीयापराभिधानेन वियोगिनीवृत्तेनैव विनिर्ममे इति तु प्रस्पष्टमेव सुधियां भारविसहृदयानां प्रथममेव श्लोकमधोलिखितं श्रुतिगोचरीकृतवताम्—

विहितां प्रियया मनः–प्रिया—
—मथ निश्चित्य गिरं गरीयसीम् ।
उपपत्तिमदूर्जिताश्रयं
नृपमूचे वचनं वृकोदरः ॥[2]

किन्तु द्वितीयसर्गे यः वर्णनाविषयः स नात्यन्तिकप्रियजनवियोगरूपः, अपितु राजनयप्रयोगरूपः । एकत्र द्रौपदीदयितो द्रौपदीदुःखदुःखितहृदयो युधिष्ठिरेणाऽग्रजेन नियन्त्रितबलप्रदर्शनो भीमसेनः सशोकं कौरवनिग्रहाय विग्रहनयं समर्थयति, अपरत्र दुर्दशाग्रस्तः पाण्डवराजो युधिष्ठिरः पर्यवस्थापित-शोकाकुल-हृदयो विग्रहस्याप्राप्तावसरत्वादासनाख्यमुपेक्षणनयं युक्तियुक्तं प्रस्तौति । उभावपि किञ्चित् करणीयं निर्णेतुकामौ वक्तारौ दुःखितहृदयावेति वियोगिनीवृत्तेनैव तयोर्मनसि विपरिवर्तमानं भावमभिव्यक्तिपथमानयति महाकविर्भारविः ।

---

१. रघु०, ८.६७
२. किरात०, २.१

अत्रैव सर्गे भारविकविः परस्परं सशोकं राजनयप्रयोगनिर्णयमुद्दिश्य विवदतोर्युधिष्ठिरभीमसेनयोस्समक्षमकस्मात् समायातं महर्षि व्यासमपि वियोगिनीवृत्तविनिबद्धैरेव त्रिभिश्श्लोकैरेवं वर्णयति—

'अनुशासतमित्यनाकुलं
नयवर्त्माकुलमर्जुनाग्रजम् ।
स्वयमर्थ इवाभिवाञ्छित—
स्तमभीयाय पराशरात्मजः ॥'

'मधुरैरवशानि लम्भय—
—न्नपि तिर्यञ्चि शमं निरीक्षितैः ।
परितः पटुबिभ्रदेनसां
दहनं धाम विलोकनक्षमम् ॥'

'सहसोपगतः सविस्मयं
तपसां सूतिरसूतिरापदाम् ।
ददृशे जगतीभुजा मुनिः
स वपुष्मानिव पुण्यसञ्चयः ॥'[1]

कुतस्तरामत्रापि वियोगिनीवृत्तमेव विनिबध्नाति कविरित्यस्ति कश्चन शङ्कातङ्कः । किन्तु शोकाकुलयोर्युधिष्ठिर-भीमसेनयोर्दृशा दृष्टो मुनिः शोकभावाभिव्यञ्जनसमर्थेनैव वृत्तेन वर्णनीयतामर्हतीति शङ्कातङ्कोऽयं निराकर्तुं शक्य इति ।

वृत्तमिदं वैतालीयेतिनामधेयं वियोगिनीत्यपराभिधानं वा छन्दोमञ्जरीकर्त्रा गोपालदासवैद्येन वङ्गदेशोद्भवेन 'सुन्दरी'-ति नाम्ना निर्दिष्टम् । परिभाषितञ्चेदं सूत्रेणानेन—

'अयुजोर्यदि सौ जगौ युजो
सभरा ल्गौ यदि सुन्दरी तदा ।'[2]

---

१. तदेव, २.५४-५६

२. छन्दोमञ्जरी, ३.२४२

उदाहृतञ्चेदं वृत्तं किरातकाव्यस्य द्वितीयसर्गगतेन द्वितीयेनामुना श्लोकेन—

यदवोचत वीक्ष्य मानिनी
परितः स्नेहमयेन चक्षुषा ।
अपि वागधिपस्य दुर्वचं
वचनं तद् विदधीत विस्मयम् ।।'[1]

भवतु नाम किरातकाव्यद्वितीयसर्गविनिवेशितं वृत्तं सुन्दरीति नाम्ना निर्दिष्टम् । नामभेदतो भिन्नमिव भासमानमौपच्छन्दसिकवृत्तभेदं वैतालीयमिति वा वियोगिनीति वा सुन्दरीति वा वृतस्वरूपतोऽभिन्नमेवेति सर्वं चतुरस्रमिति ।

किरातकाव्यस्य तृतीयः सर्गः चतुष्पादेन प्रतिपादमेकादशाक्षरवतेन्द्रवज्रोपेन्द्रवज्रादिवहुविकल्पेनोपजातिवृत्तेन विरचितो दृश्यते । कविकुलगुरोः कालिदासस्य कुमारसम्भवं नाम महाकाव्यमनेनैवोपजातिवृत्तभेदेन प्रारब्धम् । दृश्यतां तावदस्य वृत्तस्य श्रुतिमाधुर्यं वर्ण्यवस्तुस्वरूप-रसभावादिप्रकाशनसामर्थ्यञ्च कुमारसम्भवस्यादिम एव श्लोके—

'अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः ।।'[2] इति ।

कविकुलगुरुमेवानुसरन् भारविरपि किरातकाव्यस्य तृतीयसर्गे निम्ननिर्दिष्टान् विषयान् वर्णयितुकाम उपजातिवृत्तं विनियुंक्ते—

प्रथमो विषयो युधिष्ठिरहृदयगतमुनिविषयकरति-भावालम्बनभूतो महर्षिर्व्यासः ।

द्वितीयो विषयः कौरवविजयाय महर्षिणा व्यासेन धर्मराजस्य युधिष्ठिरस्य हृदये विक्रमोत्साहसंधुक्षणप्रयत्नः ।

---

१. तदेव, २.२
२. कुमार०, १.१

तृतीयो विषयो महर्षिणा व्यासेन हिमवति तपस्तप्तुमादिष्टः संप्रदत्त-विजययोगो महावीरो मध्यमपाण्डवोऽर्जुनः ।

चतुर्थो विषयो धैर्यावसादेन हृतमनःप्रसादाया द्रौपद्या अधिक्षेपवचनैरर्जुनस्य मन्युविवर्द्धनरूप इति ।

उपरिनिर्दिष्टेषु चतुर्षु विषयेषु प्रथमो विषयो महर्षिर्व्यासो युधिष्ठिरगत-मुनिविषयकरत्याख्यभावस्याऽऽलम्बनरूपो कविनैवं वर्ण्यते किरातकाव्यस्य तृतीय-सर्गारम्भे कलापकरचनया—

'ततः शरच्चन्द्रकलाभिरामै—
—रुत्सर्पिभिः प्रांशुमिवांशुजालैः ।
बिभ्राणमानीलरुचं पिशङ्गी—
—र्जटास्तडित्वन्तमिवाम्बुवाहम् ॥
प्रसादलक्ष्मीं दधतं समग्रां
वपुःप्रकर्षेण जनातिगेन ।
प्रसह्य चेतःसु समासजन्त—
—मसंस्तुतानामपि भावमार्द्रम् ॥
अनुद्धताकारतया विविक्तां
तन्वन्तमन्तःकरणस्य वृत्तिम् ।
माधुर्यविस्रम्भविशेषभाजां
कृतोपसंभाषमिवेक्षितेन ।
धर्मात्मजो धर्मनिबन्धिनीनां
प्रसूतिमेनःप्रणुदां श्रुतीनाम् ।
हेतुं तदभ्यागमने परीप्सुः
सुखोपविष्टं मुनिमाबभाषे ॥'[1]

मधुरमधुरा इमे उपजातिवृत्तबद्धाः श्लोकाः । श्लोका इमे महर्षेर्व्यासस्य शब्दमयीं दिव्यां भव्यां च मूर्तिं सहृदयहृदयेषु प्रतिष्ठापयन्त इव विभाव्यन्ते। एवंविधविषयवर्णनं यथोपजातिवृत्तेनोपनिबद्धं सच्छायं सौन्दर्यसुभगं सञ्जायते न तथा वृत्तान्तरोपनिबद्धम् ।

---

१, किरात०, ३.१-४

द्वितीयो विषयः खलु युधिष्ठिरहृदि व्यासमहर्षिणा विक्रमोत्साहसमुत्ते-जनरूप उपजातिवृत्तेनैव वर्णितो भारविणा तृतीयस्याऽस्य सर्गस्य निम्नाङ्कितेषु द्वित्रेषु दृष्टान्तीकृतेषु श्लोकेषु—

पथश्च्युतायां समितौ रिपूणां
धर्म्यां दधानेन धुरं चिराय ।
त्वया विपत्स्वप्यविपत्तिरम्य-
माविष्कृतं प्रेम परं गुणेषु ।।

विधाय विध्वंसमनात्मनीनं
शमैकवृत्तेर्भवतश्छलेन ।
प्रकाशितत्वन्मतिशीलसाराः
कृतोपकारा इव विद्विषस्ते ।।

लभ्या धरित्री तव विक्रमेण
ज्यायांश्च वीर्यास्त्रबलैर्विपक्षः ।
अतः प्रकर्षाय विधिर्विधेयः
प्रकर्षतन्त्रा हि रणे जयश्रीः ।।[1]

तृतीयो विषयो महर्षिणा व्यासेन शत्रुविजयार्थं पाशुपतास्त्रं प्राप्तुं तपश्च-रणाय समुत्तेजितोत्साहसंपत्समृद्धो मध्यमपाण्डवोऽर्जुन उपजातिवृत्तविनियोगेनैव वर्णितः । एवंभूतस्यार्जुनस्य वर्णनपरा दृष्टान्ततया श्लोका इमे द्रष्टव्याः—

निर्याय विद्याऽथ दिनादिरम्याद्
बिम्बादिवार्कस्य मुखान्महर्षेः ।
पार्थाननं वह्निकणावदाता
दीप्तिः स्फुरत्पद्ममिवाभिपेदे ।।

योगं च तं योग्यतमाय तस्मै
तपःप्रभावाद्वितताार सद्यः ।
येनास्य तत्त्वेषु कृतावभासे
समुन्मिमीलेव चिराय चक्षुः ।।

---

१. तदेव, ३.१५-१७

आकारमाशंसितभूरिलाभं
दधानमन्तःकरणानुरूपम् ।
नियोजयिष्यन् विजयोदये तं
तपःसमाधौ मुनिरित्युवाच ॥

अनेन योगेन विवृद्धतेजाः
निजां परस्मै पदवीमयच्छन् ।
समाचराचारमुपात्तशस्त्रो
जपोपवासाभिषवैर्मुनीनाम् ॥[1]

उपजातिवृत्तनिबद्धश्चतुर्थो विषयो भृशं दुःखाक्रान्ताया द्रौपद्या अधिक्षेपपरैर्वचनैरर्जुनस्य मन्युविवर्धनरूपः। उपजातिवृत्तं क्षेमेन्द्रेण सुवृत्ततिलक एवं लक्षितम् ।

तकाराभ्यां जकारेण युक्तं गुरुयुगेन च ।
इन्द्रवज्राभिधं प्राहुर्वृत्तमेकादशाक्षरम् ॥
जतजैर्गुरुयुग्मेन संसक्तैरुपलक्षितम् ।
वदन्त्युपेन्द्रवज्राख्यं वृत्तमेकादशाक्षरम् ॥
पदानन्तरविन्यासयोगैर्बहुभिरेतयोः ।
वैचित्र्यजातिरुचिरा भवन्त्येवोपजातयः ॥[2]

दृश्यन्तां एतत्प्रसङ्गसङ्गताः श्रुतिमधुरमनोहराः कतिपये श्लोकाः—

मग्नां द्विषच्छद्मनि पङ्कभूते
संभावनां भूतिमिवोद्धरिष्यन् ।
आधिद्विषामातपसां प्रसिद्धे-
रस्मद्विना मा भृशमुन्मनीभूः ॥

---

१. तदेव, ३.२५-२८
२. सुवृत्त १.१८-२०

यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः ॥

लोकं विधात्रा विहितस्य गोप्तुं
क्षत्रस्य मुष्णन् वसु जैत्रमोजः ।
तेजस्वितायाः विजयैकवृत्ते-
र्निघ्नन् प्रियं प्राणमिवाभिमानम् ॥

व्रीडानतैराप्तजनोपनीतः
संशय्य कृच्छ्रेण नृपैः प्रपन्नः ।
वितानभूतं विततं पृथिव्यां
यशः समूहन्निव दिग्विकीर्णम् ॥

वीर्यावदानेषु कृतावमर्ष-
स्तन्वन्नभूतामिव संप्रतीतिम् ।
कुर्वन् प्रयामक्षयमायतीना-
मर्कत्विषामह्न इवावशेषः ॥

प्रसह्य योऽस्मासु परैः प्रयुक्तः
स्मर्तुं न शक्यः किमुताधिकर्तुम् ।
नवीकरिष्यत्युपशुष्यदार्द्रः
सत्वद्विना मे हृदयं निकारः ॥[1] इत्यादयः ।

काव्यप्रबन्धेषु रसभावाभिव्यञ्जनक्षमाणां तत्तद्वस्तुवर्णनानुगुणानाञ्चोपजातिवृत्तानां विनियोगः काव्यवृत्तविदग्धेन काव्यशास्त्रमर्मज्ञेन काश्मीरिकेण क्षेमेन्द्रेण सुवृत्ततिलक एवं सिद्धान्तितः—

शृङ्गारालम्बनोदारनायिकारूपवर्णनम् ।
वसन्तादि तदङ्गं च सच्छायमुपजातिभिः ॥[2] इति ।

---

१. किरात०, ३.३९-४४

२. सुवृत्त०, ३.१७

अत्र 'शृंगारालम्बने'त्यादिवचनं रसान्तराणां तदङ्गानाञ्चापि संग्राहकमिति निश्चप्रचम्। वस्तुतः कालिदासप्रथमानां भारविद्वितीयानां च महाकवीनां कविकर्मकौशलविमर्शमूलक एवोपर्युक्तः क्षेमेन्द्रसिद्धान्तः। किरातकाव्यस्य द्वितीयसर्गे निबद्धान्युपजातिवृत्तानि तद्गतरसभावानुकूलानि तद्गततत्तद्वस्तुवर्णनानुगुणानि चेति तु प्रस्पष्टमेव।

किरातकाव्यस्य चतुर्थः सर्गो वंशस्थवृत्तविलास इति सर्गमुखादेव श्लोकादमुष्मात् स्पष्टीभवति—

ततः स कूजत् कलहंसमेखलां
सपाकसस्याहितपाण्डुतागुणाम्।
उपाससादोपजनं जनप्रियः
प्रियामिवासादितयौवनां भुवम्॥[1]

अस्मिन् सर्गे महाकविर्भारविर् मध्यमपाण्डवस्य शत्रुविजयाय तपश्चरिष्णोर्हिमवन्तं प्रति प्रस्थातुकामस्य कृते मध्येमार्गं प्रतिग्रामं समुन्मिषन्तीं शरच्छोभां वर्णयति। अत्रापि 'षाड्गुण्यप्रवणा नीतिर्वंशस्थेन विराजते'[2] इति सुवृत्ततिलकस्याष्टादशतमे श्लोके क्षेमेन्द्रेण यत् सिद्धान्तितम् तदेव दृष्टान्तरूपेण दर्शनीयतामर्हति। अत्र न सैन्यबलसहायः शत्रुविजयाय निष्क्रामन्नर्जुनो वर्ण्यते, किन्तु शत्रुविजयाय महर्षेर्व्यासस्यादेशानुसारं हिमवति शङ्करं भगवन्तं प्रसाद्य तत्प्रदत्तं पाशुपतास्त्रं प्राप्तुं तपस्तप्तुम्। षाड्गुण्ये प्रथमस्याऽत्र प्रयाणरूपस्य प्रसक्त्यानुप्रसक्त्या वर्णनं वंशस्थवृत्तेन विनिबद्धं शोभतेतराम्।

काव्यकामनीयकभृतः चतुर्थसर्गान्तर्गता वंशस्थवृत्तविलासाः श्लोका उदाह्रियन्ते—

विनम्रशालिप्रसवौघशालिनी-
-रपेतपङ्काः ससरोरुहाम्भसः।
ननन्द पश्यन्नुपसीम स स्थली-
रुपायनीभूतशरद्गुणश्रियः॥

---

१. किरात०, ४.१
२. सुवृत्त०, ३.१८

निरीक्ष्यमाणा इव विस्मयाकुलैः
पयोभिरुन्मीलितपद्मलोचनैः ।
हृतप्रियादृष्टिविलासविभ्रमा
मनोऽस्य जह्रुः शफरीविवृत्तयः ॥

तुतोष पश्यन् कलमस्य सोऽधिकं
सवारिजे वारिणि रामणीयकम् ।
सुदुर्लभे नार्हति कोऽभिनन्दितुं
प्रकर्षलक्ष्मीमनुरूपसंगमे ॥

नुनोद तस्य स्थलपद्मिनीगतं
वितर्कमाविष्कृतफेनसंततिः ।
अवाप्तकिञ्जल्कविभेदमुच्चकै-
र्विवृत्तपाठीनपराहतं पयः ॥

कृतोर्मिरेखं शिथिलत्वमायता
शनैः शनैः शान्तरयेण वारिणा ।
निरीक्ष्य रेमे स समुद्रयोषितां
तरङ्गितक्षौमविपाण्डुसैकतम् ॥

मनोरमं प्रापितमन्तरं भ्रुवो-
रलङ्कृतं केसररेणुनाणुना ।
अलक्तताम्राधरपल्लवश्रिया
समानयन्तीमिव बन्धुजीवकम् ॥

नवातपालोहितमाहितं मुहु-
-र्महानिवेशौ परितः पयोधरौ ।
चकासयन्तीमरविन्दजं रजः
परिश्रमाम्भःपुलकेन सर्पता ॥

कपोलसंश्लेषि विलोचनत्विषा
विभूषयन्तीमवतंसकोत्पलम् ।
सुतेन पाण्डोः कलमस्य गोपिकां
निरीक्ष्य मेने शरदः कृतार्थता ॥[1]

किरातमहाकाव्याङ्गभूता निसर्गरमणीयाः खल्विमे श्लोका वंशस्थवृत्तविनिबद्धाः । निम्नाङ्कितस्सुवृत्ततिलकस्थतृतीयविन्यासगतः श्लोकार्थसारस्सुतरां लगत्यत्र वंशस्थवृत्तसंदर्भे—

तथाऽप्यवस्थासदृशैः साधुशब्दपदस्थिताः ।
सुवृत्तैरेव शोभन्ते प्रबन्धाः सज्जना इव ॥[2] इति ।

किरातकाव्ये यः पञ्चमस्सर्गः स खलु महाकाव्यस्याऽस्य सर्गान्तरेभ्यः किञ्चिद्वैलक्षण्यं बिभर्ति । कथमिति चेत् ? यतो ह्यत्र नैकेन न वा द्वित्रेण वृत्तेन नानाविधं वर्ण्यवस्तु वर्ण्यते, अपितु बहुविधैश्चित्रविचित्रैर् वृत्तैस्तत्तद्वर्ण्यवस्तुवर्णनानुरूपैरिति । तथा हि, आदौ तावत् स पर्वतराजो हिमाचलो भारविणा वर्णनाविषयीक्रियते, यं कालिदासः—

अस्त्युत्तरस्यां दिशि देवतात्मा ।
हिमालयो नाम नगाधिराजः ॥[3]

इति विस्मयविस्फारितदृशा दर्शं दर्शं निपुणं निरूपयन्नपि निरूपणतृप्तिं नाऽवापेति प्रतीयते । महाकविना कालिदासेन कुमारसम्भवमहाकाव्ये हिमालयवर्णनायां यद्वृत्तं प्रयुक्तं तदुपजातिवृत्तम् । संभवतश्चर्मचक्षुषाऽदृष्टस्यापि श्रुतिपुराणादिप्रदत्तेन ज्ञानचक्षुषा दृष्टस्य तस्यैव हिमाचलस्य भारविणा यद्वर्णनमारभ्यते तद् 'द्रुतविलम्बित'-नामधेयेन वृत्तेन । हिमवद्वर्णनारम्भे द्रुतविलम्बितवृत्तस्याऽस्ति किञ्चिद् विशिष्टमौचित्यम् । भारवेर्ज्ञानदृष्टिः प्रतिभानदृष्टिर्वा महोच्छ्रायस्य महतो हिमाचलस्य शिखरेषु निम्नेषु द्रुतगत्या समुन्नतेषु च विलम्बितगत्या परिभ्रमन्तीव प्रतिभाति । निम्नाङ्किते हिमाचलवर्णनसंबद्धे पञ्चदशभिः द्रुतविलम्बितवृत्तैर्विनिर्मिते कुलके केचन श्लोका दृष्टान्ततया दर्शनीयतामर्हन्ति—

---

१. किरात०, ४.२-९

२. सुवृत्त०, ३.

३. कुमार०, १.१

अथ जयाय नु मेरुमहीभृतो
रभसया नु दिगन्तदिदृक्षया ।
अभिययौ स हिमाचलमुच्छ्रितं
समुदितं नु विलङ्घयितुं नभः ॥

तपनमण्डलदीपितमेकतः
सततनैशतमोवृतमन्यतः ।
हसितभिन्नतमिस्रचयं पुरः
शिवमिवानुगतं गजचर्मणा ॥

क्षितिनभःसुरलोकनिवासिभिः
कृतनिकेतमदृष्टपरस्परैः ।
प्रथयितुं विभुतामभिनिर्मितं
प्रतिनिधिं जगतामिव शम्भुना ॥

भुजगराजसितेन नभःश्रिता
कनकराजिविराजितसानुना ।
समुदितं निचयेन तडित्वतीं
लघयता शरदम्बुदसंहतिम् ॥

मणिमयूखचयांशुकभासुराः
सुरवधूपरिभुक्तलतागृहाः ।
दधतमुच्चशिलान्तरगोपुराः
पुर इवोदितपुष्पवना भुवः ॥[1] इत्यादय इति ।

यथा भारविः कौरवविजयाय शङ्करमारिराधयिषुमर्जुनं हिमाचलस्य समुन्नते कस्मिंश्चिच्छिखरे तपस्तप्तुं परिव्रजन्तं वर्णयति तथैव मेरुमहीभृतो जयाय समधिकं समुच्छ्रायमाश्रयन्तं हिमाचलमपि वर्णयति । अर्जुनव्रज्येव हिमाचलसमुच्छ्रितिरपि द्रुततया विलम्बिततया चोपलक्षितया वृत्तलयगत्या वर्ण्यमाना कवेर्वृत्तबन्धौचित्यं विभावयति । वृत्तौचित्यं हि किं रूपमिति चेत् ? एवंरूपमिति गृह्यताम्—

१. किरात०, ५.१-५

प्रस्तुतार्थोचितं काव्ये
वृत्तं सौभाग्यभाजनम् ।
स्यन्दतीव यतस्तद्धि
श्रोत्रानन्दं रसावहम ।।[१]

सुवृत्ततिलककारेण द्रुतविलम्बितवृत्तमिदमेवंलक्षणतो लक्षितम्—

अभिव्यवतं नभभरैरक्षरैर्द्वादशाक्षरम् ।
वदन्ति वृत्तजातिज्ञा वृत्तं द्रुतविलम्बितम् ।।[२]

लक्षणमिदं स्मृतिगोचरीकृत्य यः कोऽपि वृत्तमिदं बध्नातु किन्तु सुकविरेव तादृशं द्रुतविलम्बितं वृत्तं रचयितुं प्रभवति यदेतादृशं भवति—

प्रारम्भे द्रुतविन्यासं
पर्यन्तेषु विलम्बितम् ।
विच्छित्या सर्वपादानां
भाति द्रुतविलम्बितम् ।।[३]

अस्यैव सर्गस्य सप्तदशतमः श्लोको वृत्तान्तरेणौपच्छन्दसिकाभिधानेन बद्धो वर्ण्यविषयस्य भिन्नत्वात्तथा हि—

अलमेष विलोकितः प्रजानां
सहसा संहतिमंहसां विहन्तुम् ।
घनवर्त्म सहस्रधेव कुर्वन्
हिमगौरैरचलाधिपः शिरोभिः ।।[४]

---

१. स्वरचितम्
२. सुवृत्त०, १.२७
३. तदेव, २.१८
४, किरात०, ५.१७

'तुरगरसयतिर्नौभरौ गः क्षमा'[1] इत्युपलक्षितं 'क्षमा' नाम यद्वृत्तं प्रविरलविषयं श्रुतिगोचरीभवति तदपि कविना हिमाचलस्य परमपुरुषौपम्यं प्रकाशयितुं निबद्धम्, यथा—

इह दुरधिगमैः किञ्चिदेवागमैः
सततमसुतरं वर्णयन्त्यन्तरम् ।
अमुमतिविपिनं वेद दिग्व्यापिनं
पुरुषमिव परं पद्मयोनिः परम् ॥[2]

एवमेव हिमाचलस्य यत्र तत्र सर्वत्र नवनवं दृश्यजातं वर्णयितुं भारविणा निम्नाङ्कितानि सुतरामौचित्यचारूणि वृत्तान्युपनिबद्धानि—

प्रथमम्—'प्रमिताक्षरा सजससैः कथिता'[3] इति लक्षितं बह्वर्थं प्रमितैर्द्वादशभिरक्षरैरुपनिबद्धुमर्हं प्रमिताक्षरेति वृत्तम् । यथा हि—

सुलभैः सदा नयवताऽयवता
निधिगुह्यकाधिपरमैः परमैः ।
अमुना घनैः क्षितिभृतातिभृता
समतीत्य भाति जगती जगती ॥[4]

द्वितीयम्—'स्वरशरविरतिर्ननौ सरौ प्रमा'[5] इति लक्षितं द्वादशाक्षरं हिमाचलस्य धर्मक्षेत्रत्वप्रतिपादनपरं 'प्रमा' नाम वृत्तम् । यथा हि—

अखिलमिदममुष्य गौरीगुरो-
-स्त्रिभुवनमपि नैति मन्ये तुलाम् ।
अधिवसति सदा यदेनं जनै-
-रविदितविभवो भवानीपतिः ॥[6]

---

१. मल्लिनाथव्याख्या०, ५.१८
२. किरात०, ५.१८
३. छन्दोमञ्जरी, ७३
४. किरात०, ५.२०
५. मल्लिनाथव्याख्या०, ५.२१
६. किरात०, ५.२१

तृतीयम्—

'रनरैरन्वितं युक्तं लघुना गुरुणा तथा ।
ख्यातं रथोद्धतानाम वृत्तमेकादशाक्षरम् ॥'[१]

इति परिभाषितमेकादशाक्षरं रथोद्धताख्यं नामानुरूपयतिलययुतं वृत्तं यद्धि सर्गस्यास्य द्वाविंशतितमे श्लोके श्रव्यतागुणोपेतं संदृश्यते—

वीतजन्मजरसं परं शुचि
ब्रह्मणः पदमुपैतुमिच्छताम् ।
आगमादिव तमोपहादितः
संभवन्ति मतयो भवच्छिदः ॥[२]

चतुर्थम्—'कान्तोत्पीडा म्भौ स्मौ'[३] इति लक्षितं द्वादशाक्षरमतिविरलविषयं कान्तोत्पीडाभिख्यं वृत्तम् । वृत्तमिदं केवलं सर्गस्यास्य त्रयोविंशतितमे श्लोके श्रुतिगोचरीकर्तुमर्हम्—

दिव्यस्त्रीणां सचरणलाक्षारागा
रागायाते निपतितपुष्पापीडाः ।
पीडाभाजः कुसुमचिताः साशंसं
शंसन्त्यस्मिन् सुरतविशेषं शय्याः ॥[४]

वृत्तमिदं वृत्तकोविदैः 'म्भौ स्मौ चेत् स्याज्जलधरमाला ख्यातेति'[५] जलधरमालेति नाम्नाऽपि संकीर्त्यते । वृत्तस्यास्य बन्धेन भारविणा सुरतविशेषबन्धा रतिरहस्यसमुद्घाटकाः कान्तस्य कान्तायाश्च पीडोत्पादकत्वेऽप्यानन्दविशेषप्रदायका वर्णिता इति भारवेः कामशास्त्रपरिचयचारुत्वं स्पष्टं परिलक्ष्यते ।

---

१. सुवृत्त०, १.२३
२. किरात०, ५.२२
३. मल्लिनाथव्याख्या०, ५.२३
४. किरात०, ५.२३
५. मल्लिनाथव्याख्या०, ५.२३

पञ्चमम्—प्रहर्षिणीवृत्तम् । एतद्वृत्तलक्षणं सुष्ठूक्तं सुवृत्ततिलककारेण महाकविना क्षेमेन्द्रेण सुवृत्ततिलकस्य प्रथमविन्यासेऽष्टाविंशतितमे श्लोके—

समन्वितं मनजरैश्छिन्नं पूर्वाक्षरैस्त्रिभिः ।
त्रयोदशाक्षरं नाम्ना कीर्तयन्ति प्रहर्षिणीम् ॥[1]

सुवृत्ततिलकस्यैव द्वितीयविन्यासे ऊनविंशतितमे श्लोके वृत्तस्यास्य वैशिष्ट्यमपि समुट्टङ्कितम् । तद् यथा—

आकारमन्थरैः प्रायः पादे पादेऽक्षरैस्त्रिभिः ।
शेषाक्षरैर्द्रुततरैः प्रहर्षाय प्रहर्षिणी ॥ [2] इति ।

सर्गस्यास्य षड्विंशतितमः श्लोको वृत्तस्यास्य दृष्टान्तरूपेणोद्ध्रियते—

सादृश्यं गतमपनिद्रचूतगन्धै-
-रामोदं मदजलसेकजं दधानः ।
एतस्मिन् मदयति कोकिलानकाले
लीनालिः सुरकरिणां कपोलकाषः ॥[3] इति ।

षष्ठम्—जलोद्धतगत्यभिधानं 'रसैर्जसजसा जलोद्धतगतिः'[4] इति लक्षितं वृत्तम् । तदुदाहरणं यथा—

'सनाकवनितं नितम्बरुचिरं
चिरं सुनिनदैर्नदैर्वृतममुम् ।
गता फणवतोऽवतो रसपरा-
-परास्तवसुधा सुधाविवसति ॥'[5] इति ।

---

१. सुवृत्त०, १.२८
२. तदेव, २.१९
३. किरात०, ५.२६
४. मल्लिनाथव्याख्या, ५.२७
५. तदेव, ५.२७

सप्तमम्--वृत्तं वसन्ततिलकाख्यम्, यल्लक्षणं क्षेमेन्द्रेण सुवृत्ततिलके सुष्ठ्वेवं-लक्षितम्—

अभिज्ञातं तभजजैरन्तासक्तगुरुद्वयम् ।
चतुर्दशाक्षरं वृत्तं वसन्ततिलकं विदुः ।।[१] इति ।

चतुर्दशाक्षरस्याऽस्य यद् बन्धविन्यासवैशिष्ट्यं तत् सुवृत्ततिलकस्यैव द्वितीयविन्यासे विंशतितमे श्लोके एवं प्रतिपादितम्--

वसन्ततिलकस्याग्रे साकारे प्रथमाक्षरे ।
ओजसा जायते कान्तिः सविकासविलासिनी ।।[२] इति ।

वृत्तस्यास्य वसन्ततिलकनामधेयस्य किरातकाव्यस्याऽत्रैव सर्गे ऊनत्रिंशत्तमे श्लोके सुन्दरं निदर्शनं दृश्यताम्--

ईशार्थमम्भसि चिराय तपश्चरन्त्या
यादोविलङ्घनविलोलविलोचनायाः ।
आलम्बताग्रकरमत्र भवो भवान्या—
श्च्योतन्निदाघसलिलाङ्गुलिना करेण ।।[३]

अष्टमम्--शालिनीति नामकं वृत्तम् । वृत्तस्याऽस्य लक्षणं सुवृत्ततिलके क्षेमेन्द्रेणेत्थं प्रदर्शितम्--

पूर्वाक्षरचतुष्कान्तविरतिर् मततान्विता ।
गुरुद्वितययुक्ता च शालिन्येकादशाक्षरा ।।[४] इति ।

वृत्तस्याऽस्य बन्धसौन्दर्यमधिकृत्य क्षेमेन्द्रेणैव सुवृत्ततिलकस्य द्वितीयविन्यासे दशमैकादशतमयोः श्लोकयोर्यदुक्तं तदेवंरूपम्--

---

१. सुवृत्त०, १,२९
२. तदेव, २.२०
३. किरात०, ५.२९
४. सुवृत्त०, १.२२

'शालिनी श्लथबन्धैव स्वभावेन विभाव्यते ।
उत्तेजयेत्तां यत्नेन मन्ददीपशिखामिव ।।
अत्रन्ताक्षरसंयोगैः किञ्चित्कार्कश्यकारिभिः ।
अन्ते विसर्जनीयैश्च शालिनी याति दीप्तताम् ।।'[१]

बन्धसुन्दरं वृत्तमिदमेतर्हि किरातसर्गे षट्त्रिंशत्तमे श्लोके दर्शनीयतामर्हति—

नानारत्नज्योतिषां सन्निपातै-
-श्छन्नेष्वन्तःसानु वप्रान्तरेषु ।
बद्धां बद्धां भित्तिशङ्कामुष्मि-
न्नावानावान् मातरिश्वा निहन्ति ।।[२]

नवमम्—'दिङ्मुनि वंशपत्रपतितं भरनभरलगैः'[३]-रिति परिभाषितं वंशपत्रपतितं नाम वृत्तम् । सर्गस्याऽस्य त्रिचत्वारिंशत्तमः श्लोकोऽस्योदाहरणम्—

सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि
क्षीणपयस्युपेयुषि भिदां जलधरपटले ।
खण्डितविग्रहं बलभिदो धनुरिह विविधाः
पूरयितुं भवन्ति विभवः शिखरमणिरुचः ।,'[४] इति ।

विचित्रमिदं वृत्तं स्वनाम सार्थकीकुर्वदिव प्रतिभाति । यथा वंशपत्राणि प्रत्येकमलक्षितनिपातानि परिपतन्ति तथैव वृत्तेऽप्यस्मिन् पदानि निरायासं निकाममहमहमिकया योजनामुपागतानीव प्रतिभान्ति ।

एवं नव-पुराणविविधवृत्तबन्धैर् भारविर्हिमाचलस्य नव-पुराणविविधदृश्यजातं सहृदयानां भावनादृशः समक्षं समुपस्थापयतीति सर्वं समञ्जसम् ।

---

१. तदेव, २.१०-११

२. किरात०, ५.३६

३. मल्लिनाथव्याख्या, ५.४३

४. किरात०, ५.४३

षष्ठं सर्गे हिमाचलमारूढमर्जुनं तत्कार्यसिद्धिसूचकनिमित्तजातं च वर्णयितुं महाकविर्भारविः 'प्रमिताक्षरा सजससैरुदिते'[१]–ति द्वादशाक्षरेण प्रमिताक्षराख्येन वृत्तेन यन्निबध्नाति तस्यास्ति 'काव्यौपयिकमौचित्यम् । किं तदिति चेत् ? द्वित्रैः श्लोकनिदर्शनैः स्पष्टीभवत्येतत्—

मरुतः शिवा नवतृणा जगती
विमलं नभो रजसि वृष्टिरपाम् ।
गुणसम्पदानुगुणतां गमितः
कुरुतेऽस्य भक्तिमिव भूतगणः ॥
इतरेतरानभिभवेन मृगा-
-स्तमुपासते गुरुमिवान्तसदः ।
विनमन्ति चास्य तरवः प्रचये
परवान् स तेन भवतेव नभः ॥
उरु सत्त्वमाह विपरिश्रमता
परमं वपुः प्रथयतीव जयम् ।
शमिनोऽपि तस्य नवसङ्गमने
विभुतानुषङ्गि भयमेति जनः ॥[२]

अत्रेत्थं ध्येयम्–शिवमाराधयितुं तपश्चरणाय प्रवर्त्स्यमानस्यार्ज्जुनस्य मनोविक्षेपमुत्पादयितुं समर्थेषु रम्यरम्येषु बहुषु विषयेषु सत्सु[२] भारविर्निम्नाङ्कितानेव पञ्चषान् प्रमितान् विषयान् वर्णनाविषयीकर्तुमुपादत्ते—

(१) विहितालिनिक्वणजयध्वनयः कुसुमवर्षैरर्जुनमभिनन्दितुं प्रवृत्ताः पर्वतभूरुहः;

(२) जाह्नवीसलिलशीकरशीतलाः पार्वतीया मरुतः;

(३) माङ्गलिकतूर्यध्वनिनिध्वाना अर्जुनाय स्वागतवचनं व्याहर्तुकामा अनुवप्रमपां ध्वनयः;

(४) केतकशिखाग्रविशदाः सरितां प्रहासा इव फेनाः;

---

१. छन्दोमञ्जरी, २.७३

२. किरात०, ६.३३-३५

(५) सुरसरितमुपयान्त्यः पार्वतीया निर्झरिण्यः;
(६) सुखस्पर्शाः सूर्यरश्मयश्चेति ।

उपर्युक्तान् वर्णनाविषयीभूतान् विषयानुपर्युद्धृतैः प्रमितैरेव त्रिभिः श्लोकैर्यत् संक्षिपति कविस्तत् प्रमिताक्षरावृत्तसाहाय्येनैवेति नातितिरोहितं सहृदयानां भारविकाव्यरसिकानामिति । किरातार्जुनीयमहाकाव्यस्य सप्तमः सर्गः

'समन्वितं मनजरैश्छिन्नं पूर्वाक्षरैस्त्रिभिः ।
त्रयोदशाक्षरं नाम्ना कीर्तयन्ति प्रहर्षिणाम् ॥'[१]

इति क्षेमेन्द्रेण लक्षितस्य प्रहर्षिणीवृत्तस्य वर्ण्यवस्तुवर्णनानुरूपः प्रहर्ष इव प्रतीयते । अत्र वर्ण्यो विषयः खलु मदनोन्मादवतीनां देवाङ्गनानां देवेन्द्रादेशेन मध्यमपाण्डवमर्जुनं तपसो विनिवारयितुमुद्यतानां निजनियोगसाफल्यसम्भावनासमुद्भूतो महान् मनःप्रहर्षः ।

प्रहर्षिणीवृत्तस्य प्रहर्षः सुवृत्ततिलके क्षेमेन्द्रेणैवं वर्णितः—

आकारमन्थरैः प्रायः पादे पादेऽक्षरैस्त्रिभिः ।
शेषाक्षरैर्द्रुततरैः प्रहर्षाय प्रहर्षिणी ॥[२] इति ।

तत्र वर्ण्यविषये देवाङ्गनामनःप्रहर्षरूपे क्षेमेन्द्रस्याभिप्रायः सर्गस्याऽस्य प्रारम्भिकेषु द्वित्रेषु निम्नाङ्कितेषु श्लोकेषु प्रस्पष्टमुन्नेतुं शक्यः—

श्रीमद्भिः सरथगजैः सुराङ्गनानां
गुप्तानामथ सचिवैस्त्रिलोकभर्तुः ।
संमूर्च्छन्नलघुविमानरन्ध्रभिन्नः
प्रस्थानं समभिदधे मृदङ्गनादः ॥

सोत्कण्ठैरमरगणैरनुप्रकीर्णा-
न्निर्याय ज्वलितरुचः पुरान्मघोनः ।
रामाणामुपरि विवस्वतः स्थितानां
नासेदे चरितगुणत्वमातपत्रैः ॥

१. सुवृत्त०, २.१९
२. तदेव, २.१९

धूतानामभिमुखपातिभिः समीरै-
रायासादविशदलोचनोत्पलानाम् ।
आनिन्ये मदजनितां श्रियं वधूना-
-मुष्णांशुद्युतिजनितः कपोलरागः ॥[1]

किरातकाव्यस्याष्टमो देवाङ्गनावनविहारवर्णनापरः सर्गो यथापूर्वोक्त-वंशस्थवृत्तेनैव सच्छायीकृतो रञ्जयति सहृदयानां मनांसि । द्वित्राः श्लोका दृष्टान्तरूपेणोदाह्रियन्ते—

'समुन्नतैः काशदुकूलशालिभिः
परिक्वणत्सारसपंक्तिमेखलैः ।
प्रतीरदेशैः स्वकलत्रचारुभि—
र्विभूषिताः कुञ्जसमुद्रयोषितः ॥

विदूरपातेन भिदामुपेयुष-
श्च्युताः प्रवाहादभितः प्रसारिणः ।
प्रियाङ्कशीताः शुचिमौक्तिकत्विषो
वनप्रहासा इव वारिबिन्दवः ॥

सखीजनं प्रेमगुरूकृतादरं
निरीक्षमाणा इव नम्रमूर्तयः ।
स्थिरद्विरेफाञ्जनशारितोदरै-
-र्विसारिभिः पुष्पविलोचनैर्लताः ॥[2]

किरातकाव्यस्य नवमे सर्गे देवाङ्गनानां जलक्रीडाऽनन्तरं सूर्यास्तदेवाङ्ग-नारतिविहारादिवस्तूनि वर्णयितुं भारविः—

गुरुद्वययुतैरन्ते रनभैरुपलक्षिता ।
गदितं स्वागतानाम वृत्तमेकादशाक्षरम् ॥[3]

---

१. किरात०, ७.१-३
२. तदेव, ८.९-११
३. सुवृत्त, १.२४

इति क्षेमेन्द्रेण लक्षितमेकादशाक्षरं स्वागतामिधं वृत्तं विनिबध्नाति । क्षेमेन्द्रदृशा स्वागता 'कविकर्मविलासिनी'[1] संपद्यते यदि तस्याः पादचतुष्टयं साकाराद्यत्वेन विसर्गान्तत्वेन च सविभ्रमं सहृदयश्रोत्रयोः पतति ।

दृष्टान्तरूपेण दृश्यतामयं श्लोकः—

मुक्तमूललघुरुज्झितपूर्वः
पश्चिमे नभसि संभृतसान्द्रः ।
सामिमज्जति रवौ न विरेजे
खिन्नजिह्म इव रश्मिसमूहः ॥[2]

अथवा सप्तदशसंख्याकश्लोकः—

व्यानशे शशधरेण विमुक्तः
केतकीकुसुमकेसरपाण्डुः ।
चूर्णमुष्टिरिव लम्भितकान्ति-
-र्वासवस्य दिशमंशुसमूहः ॥[3]

अथवोनविंशतितमः श्लोकः—

नीलनीरजनिभे हिमगौरं
शैलरुद्धवपुषः सितरश्मेः ।
खे रराज निपतत्करजालं
वारिधेः पयसि गाङ्गमिवाम्भः ॥[4]

सुरपतिसूनुविलोभनाय प्रस्थितानां सुराङ्गनानां कामचेष्टा मध्यमपाण्डवस्य निर्विकारभावं च वर्णयितुमिच्छुर् महाकविर्भारविः स्वकाव्यस्य दशमं सर्गं 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रे[5]'ति परिभाषि-

---

१. तदेव, २.१५
२. किरात०, ९.५
३. तदेव, ९.१७
४. तदेव, ९.१९
५. छन्दोमञ्जरी, ३.२४१

तेन पुष्पिताग्रावृत्तेन विनिर्माति । नवमसर्गे प्रयुक्तं वृत्तं विहाय दशमसर्गे वृत्तान्तरयोजनमौचित्यावहमेव । नैरन्तर्येण कर्णयोः प्रविष्टं स्वागतावृत्तलयगतिमाधुर्यं न सहृदयजनमनोरञ्जनाय प्रभवेदिति मत्वैव कविर्वृत्तान्तरस्य पुष्पिताग्राभिधस्यान्यादृशं माधुर्यं सिसृक्षुर्यद्यतते तद् वर्ण्यविषयस्य पूर्ववर्णिताद् विषयाद् वैभिन्याद् युक्ततरमेव प्रतिभासते । दृश्यतां द्वित्रैर्निदर्शनैर्वृत्तस्याऽस्य नामसार्थक्यम्—

तत्र प्रथमं निदर्शनं सर्गस्याऽस्य चतुर्थः श्लोकः—

ध्वनिरगविवरेषु नूपुराणां
पृथुरशनागुणशिञ्जितानुयातः ।
प्रतिरववितततो वनानि चक्रे
मुखरसमुत्सुकहंससारसानि ॥[१]

अत्र प्रतिपादं प्रथमं विन्यस्तानि पदानि भारवेः कवितावल्लरीं पुष्पिताग्रामिव विभावयन्ति, पश्चाच्च प्रयुक्तानां पदानां तत्सरसफलप्रचयरूपत्वादिति ।

वृत्तस्याऽस्य द्वितीयं निदर्शनं निम्नलिखिते पञ्चत्रिंशत्तमे श्लोके द्रष्टुमर्हम्—

प्रभवति न तदा परो विजेतुं
भवति जितेन्द्रियता यदात्मरक्षा ।
अवजितभुवनस्तथा हि लेभे
सिततुरगे विजयं न पुष्पमासः ॥[२]

तृतीयञ्चैकं सुन्दरं निदर्शनं सर्गस्यास्य ६२तमे श्लोके—

रुचिकरमपि नार्थवद् बभूव
स्तिमितसमाधिशुचौ पृथातनूजे ।
ज्वलयति महतां मनांस्यमर्षे
न हि लभतेऽवसरं सुखाभिलाषः ॥[३]

---

१. किरात०, १०.४
२. तदेव, १०.३५
३. तदेव, १०.६२

एतत्सर्गसमापकः श्लोको भारविणा—

'यमनैः सभलैर्गेन मुक्ता सप्तदशाक्षरा ।
षडेकादशविच्छेदवती शिखरिणी मता ॥'[१]

इति क्षेमेन्द्रेण लक्षितेन सप्तदशाक्षरेण 'शिखरिणी' इत्याख्येन वृत्तेन विरचितो यथा हि—

स्वयं संराध्यैवं शतमखमखण्डेन तपसा
परोच्छित्त्या लभ्यामभिलषति लक्ष्मीं हरिसुते ।
मनोभिः सोद्वेगैः प्रणयविहतिध्वस्तरुचयः
सगन्धर्वा धाम त्रिदशवनिताः स्वं प्रतिययुः ॥[२] इति ।

किञ्चिद् विचित्रमिदं प्रतिभाति यत् सुकविकर्मोपयुक्तैरेकोनविंशति-विधैर्वृत्तैर्निबद्धैरष्टाविंशत्यधिकैकसहस्रश्लोकैर्विरचिते खल्वस्मिन् किरातार्जुनीयमहाकाव्ये श्लोकत्रयमेव शिखरिण्यां निबद्धं द्रष्टुमर्हम् । तत्रैकः पूर्वोदाहृतः । द्वौ चापरावष्टादशसर्गगतौ । तत्र प्रथमः पञ्चचत्वारिंशः श्लोको यथा—

स पिङ्गाक्षश् श्रीमान् भुवनमहनीयेन महसा
तनुं भीमां बिभ्रत् त्रिगुणपरिवारप्रहरणः ।
परीत्येशानं त्रिः स्तुतिभिरुपगीतस्सुरगणैः
सुतं पाण्डोर्वीरं जलदमिव भास्वानभिययौ ॥[३]

द्वितीयश्च सप्तचत्वारिंशः श्लोको निम्नाङ्कितः—

असंहार्योत्साहं जयिनमुदयं प्राप्य तरसा
धुरं गुर्वीं वोढुं स्थितमनवसादाय जगतः ।
स्वधाम्ना लोकानां तमुपरि कृतस्थानममरा-
-स्तपोलक्ष्म्या दीप्तं दिनकृतमिवोच्चैरुपजगुः ॥[४] इति ।

---

१. सुवृत्त०, १.३४
२. किरात०, १०.६३
३. तदेव, १८.४५
४. तदेव, १८.४७

उपर्युक्तानि त्रीण्येव शिखरिणीवृत्तानि महाकवेर्भारवेः 'शिखरिणी'-विन्यासवैदग्ध्यं स्पष्टमुद्घोषयन्ति। क्षेमेन्द्रेण सुवृत्तमर्मज्ञेन स्वरचिते सुवृत्त-तिलके द्वितीयविन्यासस्यैकत्रिंशे श्लोके शिखरिण्या नैसर्गिकमोजस्वित्वमेवं निरूपितम्—

शिखरिण्याः समारोहात् सहजैवोजसः स्थितिः।
सैव लुप्तविसर्गान्तैः प्रयात्यत्यन्तमुन्नतिम्॥[1]

भारविविनिर्मिते शिखरिणीवृत्तबन्धत्रयेऽपि लुप्तविसर्गान्तानां पदाना-मुपर्युपर्यारोहोऽनायासं श्रुतिपथमायाति। अनेनैव पदानां समारोहेण भारवेः शिखरिणी निकाममोजस्विनी तरस्विनी च प्रतीयते। पदानां समारोहाभावेनैव रम्यरसभावोऽपि महाकवेर्भवभूतेर्निम्नाङ्कितः शिखरिणीवृत्तबन्धो विच्छाय ओजोहीनश्च परिलक्ष्यते—

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम्।
अदर्पं कन्दर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः॥[2]

किरातकाव्यस्यैकादशसर्गः पार्यन्तिकं श्लोकं विहायानुष्टुब्वृत्तेन बद्धः। अनुष्टुभमधिकृत्य युक्तियुक्तमुक्तं क्षेमेन्द्रेण सुवृत्ततिलकस्य प्रथमविन्यासे चतुर्दश-पञ्चदशश्लोकयोः—

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
गुरु षष्ठं च सर्वेषामेतच्छ्लोकस्य लक्षणम्॥
असंख्यो भेदसंसर्गादनुष्टुप्छन्दसां गणः।
तत्र लक्ष्यानुसारेण श्रव्यतायाः प्रधानता॥[3] इति

पुनश्च तेनैवानुष्टुप्छन्दसां श्रव्यतां सिद्धान्तरूपेण प्रतिपादयितुं सुवृत्त-तिलकस्यैव द्वितीयविन्यासे चतुर्थ-पञ्चमयोः श्लोकयोरेवमुक्तम्—

---

१. सुवृत्त०, २.३१
२. मालतीमाधवम्
३. सुवृत्त०, १.१४,१५

अनुष्टुप्छन्दसां भेदे कैश्चित् सामान्यलक्षणम् ।
यदुक्तं पञ्चमं कुर्याल्लघु षष्ठं तथा गुरु ॥
तत्राप्यनियमो दृष्टः प्रबन्धे महतामपि ।
तस्मादव्यभिचारेण श्रव्यतैव गरीयसी ॥[1] इति

भारवेरनुष्टुब्वृत्तबन्धेषु क्षेमेन्द्रसिद्धान्तिता श्रव्यता श्रुतिग्राह्यमुखदता वा सर्वत्र श्रुतिगोचरीभवति । भारवेरानुष्टुभेषु वृत्तेषु श्रव्यतागुणस्य दृष्टान्तीभूताः पञ्चषाः श्लोका दर्शनीयतामावहन्ति—

अथामर्षान्निसर्गाच्च जितेन्द्रियतया तया ।
आजगामाश्रमं जिष्णोः प्रतीतः पाकशासनः ॥
मुनिरूपोऽनुरूपेण सूनुना ददृशे पुरः ।
द्राघीयसा वयोऽतीतः परिक्लान्तः किलाध्वना ॥
जटानां कीर्णया केशैः संहत्या परितः सितैः ।
पृक्तयेन्दुकरैरह्नः पर्यन्त इव सन्ध्यया ॥
विशदभ्रूयुगच्छन्नवलितापाङ्गलोचनः ।
प्रालेयावततिम्लानपलाशाब्ज इव ह्रदः ॥
आसक्तभरनीकाशैरङ्गैः परिकृशैरपि ।
आद्यूनः सद्गृहिण्येव प्रायो यष्ट्यावलम्बितः ॥
गूढोऽपि वपुषा राजन् धाम्ना लोकाभिभाविना ।
अंशुमानिव तन्वभ्रपटलच्छन्नविग्रहः ॥[2]

क्षेमेन्द्रेण लघुवृत्तानां समस्तपदप्रयोगाद् यच्छोभावहत्वं सुवृत्ततिलकस्य द्वितीयविन्यासे तृतीयश्लोके प्रतिपादितं तस्यापि निदर्शनमुपर्युद्धृतेषु श्लोकेषु स्पष्टमेव दृश्यते ।

काव्ये सर्गबन्धारम्भे, कथाविस्तारसंग्रहे, शमोपदेशवृत्तान्ते चानुष्टुब्वृत्त-प्रयोगः प्रशस्यो भवतीत्यपि यत् काव्यतत्त्वविदां सुवृत्तबन्धवैशिष्ट्यविदां काव्याचार्याणां परिनिष्ठितं मतं तदपि भारवेर्निम्ननिर्दिष्टेषु सर्गस्याऽस्यैव श्लोकेषु समनुसृतं संलक्ष्यते—

१. सुवृत्त०, २.४,५
२. किरात०, ११.१-६

यः करोति वधोदर्का निःश्रेयसकरीः क्रियाः ।
ग्लानिदोषच्छिदः स्वच्छाः स मूढः पङ्कयत्यपः ॥
मूलं दोषस्य हिंसादेरर्थकामौ स्म मा पुषः ।
तौ हि तत्त्वावबोधस्य दुरुच्छेदावुपप्लवौ ॥
अभिद्रोहेण भूतानामर्जयन् गत्वरीः श्रियः ।
उदन्वानिव सिन्धूनामापदामेति पात्रताम् ॥
या गम्याः सत्सहायानां यासु खेदो भयं यतः ।
तासां किं यन्न दुःखाय विपदामिव संपदाम् ॥
दुरासदानरीनुग्रान् धृतेर्विश्वासजन्मनः ।
भोगान् भोगानिवाहेयानध्यास्यापन्नदुर्लभा ॥
नान्तरज्ञाः श्रियो जातु प्रियैरासां न भूयते ।
आसक्तास्तास्वमी मूढा वामशीला हि जन्तवः ॥
कोऽपवादः स्तुतिपदे यदशीलेषु चञ्चलाः ।
साधुवृत्तानपि क्षुद्राः विक्षिपन्त्येव संपदः ॥[1]

द्वादशः सर्गः किरातकाव्यस्योद्गताभिधेन वृत्तान्तरेण विरचितो भारविणा । उद्गतावृत्तलक्षणं यथा—

'सजसादिमे सलघुकौ च नसजगुरुकैरथोद्गता ।
त्र्यंघ्रिगतभनजला गयुताः सजसा जगौ चरणमेकतः पठेत्' ॥[2] इति ।

अत्र सर्गे वासवस्य वचनेन त्रिलोचनमाराधयितुं तपस्तप्तुं प्रयतो धनञ्जयः प्रथमं वर्ण्यते । 'उद्गतावृत्तस्य' यतिलयगतिमाधुर्यवैचित्र्यं वस्तुतोऽतीव मनोरञ्जकं श्रुतिगोचरीकर्तव्यतामर्हति । दृश्यतां निम्नाङ्कितं प्रारम्भिकमेव श्लोकपञ्चकम्—

अभिरश्मिमालि विमलस्य धृतजयधृतेरनाशुषः ।
तस्य भुवि बहुतिथास्तिथयः प्रतिजन्मुरेकचरणं निषीदतः ॥

---

१. तदेव, ११.१९-२५

२. मल्लिनाथव्याख्या, १२.१

वपुरिन्द्रियोपतपनेषु सततमसुखेषु पाण्डवः ।
व्याप नगपतिरिव स्थिरतां महतां हि धैर्यमविभाव्यवैभवम् ।।
न पपात संनिहितपवितसुरभिषु फलेषु मानसम् ।
तस्य शुचिनि शिशिरं च पयस्यमृतायते हि सुतपः सुकर्मणाम् ।।
न विसिस्मिये न विषसाद मुहुरलसतां न चाददे ।
सत्त्वमुरुधृति रजस्तमसी न हतः स्म तस्य हतशक्तिपेलवे ।।
तपसा कृशं वपुरुवाह स विजितजगत्त्रयोदयम् ।
त्रासजननमपि तत्त्वविदां किमिवास्ति यन्न सुकरं मनस्विभिः ।।
ज्वलतोऽनलादनुनिशीथमधिकरुचिरम्भसां निधेः ।
धैर्यगुणमवजयन् विजयी ददृशे समुन्नततरः सशैलतः ।।[1]

उद्गताभिधे वृत्ते प्रथमद्वितीयपादापेक्षया तृतीयचतुर्थयोः पादयोरक्षराधिक्यं क्रमशः वर्णध्वनिमाधुरीणां कर्णयोः परिवर्द्धनं हृदये च हृदयानां मन्दमन्दं परिवर्धमानं रणनानुरूपमनुरणनं च किमपि समुत्कण्ठासमुत्तेजकं सुखमिव प्रयच्छत् प्रतीयते । पञ्चषाः श्लोका निदर्शनार्हा इत्यधो लिख्यन्ते—

तरसैव कोऽपि भुवनैकपुरुष पुरुषस्तपस्यति ।
ज्योतिरमलवपुषोऽपि रवेरभिभूय वृत्र इव भीमविग्रहः ।।
स धनुर्महेषुधि बिभर्ति कवचमसिमुत्तमं जटाः ।
वल्कमजिनमिति चित्रमिदं मुनिताविरोधि न च नास्य राजते ।।
चलनेऽवनिश्चलति तस्य करणनियमे सदिङ्मुखम् ।
स्तम्भमनुभवति शान्तमरुद्ग्रहतारकागणयुतं नभस्तलम् ।।
स तदौजसा विजितसारममरदितिजोपसंहितम् ।
विश्वमिदमपिदधाति पुरा किमिवास्ति यन्न तमसामदुष्करम् ।।
विजिगीषते यदि जगन्ति युगपदथ संजिहीर्षति ।
प्राप्तुमभवमभिवाञ्छति वा वयमस्य नो विषहितुं क्षमा रुचः ।।
किमुपेक्षसे कथय नाथ न तव विदितं न किञ्चन ।
त्रातुमलमभयदार्हसि नस्त्वयि मा स्म शासति भवत्पराभवः ।।[2] इति।

१. किरात०, १२.२-७
२, तदेव, १२.२६-३१

काव्यस्याऽस्य त्रयोदशः सर्ग आदितश्चतुर्विंशच्छ्लोकपर्यन्तं यावत् पूर्वप्रयुक्तेनैवौपच्छन्दसिकनाम्ना वृत्तेन विरचितो भारविणा । औपच्छन्दसिकं वृत्तलक्षणं त्विदम्—

'षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तरा ।
न समात्र पराश्रिता कला 'वैतालीये'ऽन्ते रलौ गुरुः ।
तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसिकं कवीन्द्रहृदयम् ॥'[1]

औपच्छन्दसिकं वृत्तं विविधं वस्तु विशदं निरूपयितुं क्षममित्यत्र प्रस्पष्टं प्रत्याय्यते । औपच्छन्दसिकवृत्तेनाऽत्र धनञ्जयं जिघांसुस्तदभिमुखं च द्रुतवेगं द्रवन् वराहो वर्ण्यते । वराहवर्णनमिदमादौ तु भयरूपं भावमभिव्यनक्ति किन्तु पर्यन्तेऽर्जुनस्य पराक्रमेणोत्साहोत्तेजने पर्यवस्यत् प्रतीयते । दृष्टान्तरूपेण पञ्चषाः श्लोका अत्रोद्ध्रियन्ते—

वपुषा परमेण भूधराणामथ संभाव्यपराक्रमं विभेदे ।
मृगमाशु विलोकयाञ्चकार स्थिरदंष्ट्रोग्रमुखं महेन्द्रसूनुः ॥
स्फुटबद्धसटोन्नतिः स दूरादभिधावन्नवधीरितान्यकृत्यः ।
जयमिच्छति तस्य जातशङ्के मनसीमं मुहुराददे वितर्कम् ॥
घनपोत्रविदीर्णशालमूलो निबिडस्कन्धनिकाषरुग्णवप्रः ।
अयमेकचरोऽभिवर्तते मां समरायेव समाजुहूषमाणः ॥
इह वीतभयास्तपोऽनुभावाज्जहति व्यालमृगाः परेषु वृत्तिम् ।
मयि तां सुतरामयं विधत्ते विकृतिः किं नु भवेदियं नु माया ॥
अथवैष कृतज्ञयेव पूर्वं भृशमासेवितया रुषा न मुक्तः ।
अविधूय विरोधिनीः किमारान्मृगजातीरभियाति मां जवेन ॥
न मृगः खलु कोऽप्ययं जिघांसुः स्खलति ह्यत्र तथा भृशं मनो मे ।
विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं वा ॥'[2]

आपञ्चत्रिंशच्छ्लोकादा च सर्गान्तं, पार्यन्तिकं वासन्ततिलकं श्लोकं विहाय भारविणा स्वागतावृत्तेन हरकिरातस्याऽनुचरस्य वनेचरस्य वृत्तान्तो

---

१. छन्दोमञ्जरी, ५.२५९-२६०

२. किरात०, १३.१-६

वर्ण्यते । एतत्प्रसङ्गे भारवेः स्वागता स्वागतेव सहृदयानां किरातकाव्यप्रणयिनां हृदये प्रविशन्ती प्रतिभाति । निदर्शनरूपतया श्लोकपञ्चकं द्रष्टव्यम्—

शान्तता विनययोगि मानसं
भूरिधाम विमलं तपः श्रुतम् ।
प्राह ते नु सदृशी दिवौकसा-
-मन्ववायमवदातमाकृतिः ॥

दीपितस्त्वमनुभावसम्पदा
गौरवेण लघयन् महीभृतः ।
राजसे मुनिरपीह कारय-
-न्नाधिपत्यमिव शातमन्यवम् ॥

तापसोऽपि विभुतामुपेयिवा-
-नास्पदं त्वमसि सर्वसंपदाम् ।
दृश्यते हि भवतो विना जनै-
-रन्वितस्य सचिवैरिव द्युतिः ॥

विस्मयः क इव वा जयश्रिया
नैव मुक्तिरपि ते दवीयसी ।
ईप्सितस्य न भवेदुपाश्रयः
कस्य निर्जितरजस्तमोगुणः ॥

ह्रेपयन्नहिमतेजसं त्विषा
स त्वमित्थमुपपन्नपौरुषः ।
हर्तुमर्हसि वराहभेदिनं
नैनमस्मदधिपस्य सायकम् ॥[1]

किरातकाव्यस्य चतुर्दशः सर्गः काव्यौपयिकीं कामपि वैशिष्ट्यवैचित्रीं बिभ्रता वंशस्थवृत्तेनैव विरचितो भारविणा । अत्र सर्गे हरकिरातनिर्दिष्टं राजनयं प्रत्याख्यातुकामस्यार्जुनस्य मुनिवृत्तेर्वचनं वंशस्थवृत्तेन प्रकाशितं स्वदते

---

१. तदेव, १३.३७-४१

सहृदयेभ्यः। वंशस्थवृत्तबन्धचतुष्टयं भारवेः काव्यमपि संस्पृशत् समुदाह्रियते दृष्टान्तरूपेण वंशस्थवृत्तप्रणयिनां कृते—

विचित्रवर्णाभरणा सुखश्रुतिः
प्रसादयन्ती हृदयान्यपि द्विषाम्।
प्रवर्तते नाकृतपुण्यकर्मणां
प्रसन्नगम्भीरपदा सरस्वती॥

भवन्ति ते सभ्यतमा विपश्चितां
मनोगतं वाचि निवेशयन्ति ये।
नयन्ति तेष्वप्युपपन्ननैपुणा
गभीरमर्थं कतिचित् प्रकाशताम्॥

स्तुवन्ति गुर्वीमभिधेयसम्पदं
विशुद्धिमुक्तेरपरे विपश्चितः।
इतिस्थितायां प्रतिपूरुषं रुचौ
सुदुर्लभाः सर्वमनोरमा गिरः॥

समस्य संपादयता गुणैरिमां
त्वया समारोपितभारभारतीम्।
प्रगल्भमात्मा धुरि धुर्य वाग्मिनां
वनेचरेणापि सताऽधिरोपितः॥[1]

अत्र भारविः स्वरचितं किरातार्जुनीयमपि प्रसन्नगम्भीरपदं निर्दिशन् निवेदयन्वा प्रतीयते। न सौशब्द्यमात्रे भारवेरभिरुचिर्न वौदार्यमात्रे किन्त्वौदार्यानुगुणेऽर्थगौरवानुरूपे वा सौशब्द्ये शब्दसौष्ठवे वेति, निर्गलत्येवाऽत्र भारवेर्निगूढाभिप्रायः। 'भारवेरर्थगौरव'-मिति भारविप्रशस्तिः, मन्ये, भारवेः स्वमनोगतनिवेदनपरादस्मादेव श्लोकसंदर्भात् समुद्भूतेति।

वंशस्थबन्धविशेषकमत्रोद्ध्रियते यत्राऽसमस्तपदतायामपि निकाममर्थगौरवानुरूपं सौशब्द्यं समुल्लसति—

---

१. तदेव, १४.३-६

तपोबलेनैव विधाय भूयसी-
स्तनूरदृश्याः स्विदिषून्निरस्यति ।
अमुष्य मायाविहतं निहन्ति नः
प्रतीपमागत्य किमु स्वमायुधम् ॥

हृता गुणैरस्य भयेन वा मुने-
स्तिरोहिताः स्वित् प्रहरन्ति देवताः ।
कथं न्वमी संततमस्य सायका
भवन्त्यनेके जलधेरिवोर्मयः ॥

जयेन कच्चिद् विरमेदयं रणाद्
भवेदपि स्वस्ति चराचरस्य वा ।
तताप कीर्णा नृपसूनुमार्गणै-
रिति प्रतर्काकुलिता पताकिनी ॥[1]

पञ्चदशः सर्गः किरातकाव्यस्य हरकिरातसैन्यैस्सहैकाकिनोऽर्जुनस्य तपस्विनश्चित्रमायोधनं वर्णयितुं भारविणा गोमूत्रिकासर्वतोभद्रादिचित्रबन्धान् प्रदर्शयताऽनुष्टुब्वृत्तेन विनिर्मितः । तत्र पञ्चमः श्लोक एकाक्षरपदात्मक एवंरूपः—

स सासिः सासुसूः सासो येयायेयाययाययः ।
ललौ लीलां ललोऽलोलः शशीशशिशुशीः शशन् ॥[2]

किमुद्दिश्य भारविणैकाक्षरपदात्मिकैतादृशी श्लोकरचना कृतेति चेत् ? किरातसेनां धनञ्जयप्रतापेन परास्तभूतां समुत्साहयितुं हरकिरात एतादृशीं वाचोयुक्तिं विधत्ते यस्या अभिप्रायो धनञ्जयानवगम्यः किरातावबोध्य एव भवेत् ।

एवमेव पञ्चविंशः श्लोकः सर्वतोभद्रनाम्ना चित्रबन्धेन विशेषितोऽध उल्लिख्यते—

---

१. तदेव, १४.६०-६२
२. तदेव, १५.५

देवाकानिनि कावादे वाहिकास्वस्वकाहि वा ।
काकारेभभरे काका निस्वभव्यव्यभस्वनि ॥[१]

श्लोकपञ्चकविनिर्मिते कुलके द्वितीयोऽयं श्लोकः । अत्र हरकिरातस्य स्वसैन्यानि धनञ्जयप्रतापेन ध्वस्तपौरुषाणि पश्यतः तानि च समुत्साहयितु कृत-प्रयत्नस्याऽधिक्षेपोक्तिः प्रकाशयितुमिष्टा कवेः । अतोऽत्र वर्णध्वनयोऽपि सहृद-यानां श्रोत्रैस्सह मनांस्यपि खिन्नखिन्नानि विदधति । संभाव्यते सर्वमेतन्मनसि निधाय विरचितोऽयं निकाममभद्रश्रवणोऽपि सर्वतोभद्रबन्धः ।

चक्रबन्धादिभिर्युद्धे गतिविशेषैः रभसा भ्रमतोऽर्जुनस्य वर्णनार्थं भारविणा द्व्यक्षरबन्धात्मक एक श्लोको निर्मितः—

चारचुञ्चुश्चिरारेची चञ्चच्चीररुचा रुचः,
चचार रुचिरश्चारु चारैराचारचञ्चुरः ॥[२]

द्वाभ्यामेव पादाभ्यां रणाङ्गणे चारविचक्षणस्य धनञ्जयस्य सर्वत्र संच-रणसामर्थ्यमभिव्यंक्तु प्रतीयते, भारविणा द्वाभ्यामेव चकार-रकाराक्षराभ्यां श्लोकोऽयमुपर्युद्धृतः रभसा सञ्चरणक्षमैवर्णध्वनिभिर्विशेषितो विरचित इति ।

षोडशः सर्गः किरातकाव्यस्य रणवर्णनानुगुणेनोपजातिवृत्तेन विनिवद्धः । अत्र यद्यपि रणे न चतुरङ्गिण्यौ सेने परस्परं प्रहर्तुमुद्यते किन्तु धनञ्जयस्य मनसि हरकिरातप्रतापप्रभावश्चतुरङ्गसैन्यशङ्काकारक इति कृत्वा भारविणा रणवर्णनमुपक्रान्तम् । रणवर्णनस्याऽस्य पञ्चषाः श्लोकाः श्रोतव्यतामर्हन्तीत्यु-दाह्रियन्ते—

मदस्रुतिश्यामितगण्डलेखाः
क्रामन्ति विक्रान्तनराधिरूढाः ।
सहिष्णवो नेह युधामभिज्ञा
नागा नगोच्छ्रायमिवाक्षिपन्तः ॥

---

१. तदेव, १५.२५
२. तदेव, १५.३८

विचित्रया चित्रयतेव भिन्नां
रुचं रवेः केतनरत्नभासा ।
महारथौघेन न संनिरुद्धा
पयोदमन्द्रध्वनिना धरित्री ।।

समुल्लसत्प्रासमहोर्मिमालं
परिस्फुरच्चामरफेनपंक्ति ।
विभिन्नमर्यादमिहातनोति
नाश्वीयमाशा जलधेरिवाम्भः ।।

हताहतेत्युद्धतभीमघोषैः
समुज्झिता योद्धृभिरभ्यमित्रम् ।
न हेतयः प्राप्ततडित्त्विषः खे
विवस्वदंशुज्वलिताः पतन्ति ।।

अभ्यायतः संततधूमधूम्रं
व्यापि प्रभाजालमिवान्तकस्य ।
रजः प्रतूर्णाश्वरथाङ्गनुन्नं
तनोति न व्योमनि मातरिश्वा ।।

माया स्विदेषा मतिविभ्रमो वा
ध्वस्तं नु मे वीर्यमुताहमन्यः ।
गाण्डीवमुक्ता हि यथा पुरा मे
पराक्रमन्ते न शराः किराते ।।[1]

अत्रोपर्युद्धृतेषु श्लोकेषु भारविणा युद्धवीररसोद्दीपनौपयिकानां वास्तविकानां विभावानामसत्त्वेऽपि कल्पनया तेषां यदुद्भावनं कृतं यतश्च नायकस्यार्जुनस्य चरितं प्रकामं समुज्ज्वलत्प्रतापं सञ्जातं तत् किञ्चिन्महाकविकर्मेति निर्विचिकित्सम् ।

---

१. तदेव, १६.२-६,१८

सप्तदशः सर्गोऽस्य काव्यस्योपजातिवृत्तविशेषेण विनिर्मितो दृश्यते। अत्र सर्गे धनञ्जय-हरकिरातयोरायोधनं युद्धवीररसाभिव्यञ्जकं प्रकामं हरति चेतः सचेतसाम्। अत्र नाट्याचार्यस्य शारदातनयस्य भावप्रकाशने युद्धवीररसमधिकृत्य प्रकाशिता विचारा[1] हृदयङ्गमीभवन्ति। भारवेः किरातार्जुनीये युद्धात्मकवीररसालम्बनं धनञ्जयं ध्यायं ध्यायमेव शारदातनयेन भावप्रकाशने युद्धात्मकवीररसो वर्णित इति प्रतिभाति। दृश्यन्तां शारदातनयकृता एतत्प्रसङ्गगताः श्लोकाः—

निरायुधस्याप्येकस्य हीनस्यापि परिच्छदैः।
अभीतिर्बहुभिर्योद्धुं व्यवसायो रणे मदः॥
हर्षः शस्त्रास्त्रघातेषु समरादपलायनम्।
भीताभयप्रदानञ्च प्रपन्नस्यार्तिभञ्जनम्॥
एवं युद्धात्मको वीरः तज्ज्ञैः कविभिरीरितः॥[2]

किरातकाव्यस्यैतत्सर्गारम्भकमुपजातिवृत्तविशेषरचितैः षड्भिः श्लोकैः परिकर्मितं कुलकं द्रष्टव्यामर्हति—

अथापदामुद्धरणक्षमेषु
मित्रेष्विवास्त्रेषु तिरोहितेषु।
धृतिं गुरुश्रीर्गुरुणाऽभिपुष्यन्
स्वपौरुषेणेव शरासनेन॥

भूरिप्रभावेण रणाभियोगात्
प्रीतो विजिह्मश्च तदीयवृद्ध्या।
स्पष्टोऽप्यविस्पष्टवपुःप्रकाशः
सर्पन् महाधूम इवाद्रिवह्निः॥

तेजः समाश्रित्य परैरहार्यं
निजं महन्मित्रमिवोरुधैर्यम्।
आसादयन्नस्खलितस्वभावं
भीमे भुजालम्बमिवारिदुर्गे॥

---

१, भावप्रकाशन०, ३,५२

२, तदेव,

वंशोचितत्वादभिमानवत्या
संप्राप्तया संप्रियतामसुभ्यः ।
समक्षमादित्सितया परेण
वध्वेव कीर्त्या परितप्यमानः ।।

पतिं नगानामिह बद्धमूल-
-मुन्मूलयिष्यंस्तरसा विपक्षम् ।
लघुप्रयत्नं निगृहीतवीर्य-
स्त्रिमार्गगावेग इवेश्वरेण ।।

संस्कारवत्त्वाद्रमयत्सु चेतः
प्रयोगशिक्षागुणभूषणेषु ।
जयं यथार्थेषु शरेषु पार्थः
शब्देषु भावार्थमिवाशशंसे ।।[1]

एवमेव प्रतिनायकीभूतहरकिरातालम्बनो युद्धोत्साहमहाभावोऽपि वृत्तेनाऽनेनोपजातिविशेषेण यद् वर्णितो भारविणा तस्य किरातमहाकाव्याङ्गिरसोपस्कारकरूपं किञ्चिदनुभवरमणीयं वैशिष्ट्यमाभाति यत्खलु वृत्तान्तरेण वर्णितं सत् कवेः स्खलितमिव रसभङ्गाय भवेत् । कतिपये श्लोका एतत्प्रसङ्गान्तर्गताः श्रुतिगोचरीकर्तव्यतामावहन्तः अधोलिख्यन्ते—

संप्रीयमाणोऽनुबभूव तीव्रं
पराक्रमं तस्य पतिर्गणानाम् ।
विषाणभेदं हिमवानसह्यं
वप्रानतस्येव सुरद्विपस्य ।।

तस्मै हि भारोद्धरणे समर्थं
प्रदास्यता बाहुमिव प्रतापम् ।
चिरं विषेहेऽभिभवस्तदानीं
स कारणानामपि कारणेन ।।

१. किरात०, १७.१–६

प्रत्याहृतौजाः कृतसत्त्ववेगः
पराक्रमं ज्यायसि यस्तनोति ।
तेजांसि भानोरिव निष्पतन्ति
यशांसि वीर्यज्वलितानि तस्य ।।

दृष्टावदानाद्व्यथतेऽरिलोकः
प्रध्वंसमेति व्यथिताच्च तेजः ।
तेजोविहीनं विजहाति दर्पः
शान्तार्चिषं दीपमिव प्रकाशः ।।

ततः प्रयात्यस्तमदावलेपः
स जय्यतायाः पदवीं जिगीषोः ।
गन्धेन जेतुः प्रमुखागतस्य
प्रतिद्विपस्येव मतङ्गजौघः ।।

एवं प्रतिद्वन्द्विषु तस्य कीर्तिं
मौलीन्दुलेखाविशदां विधास्यन् ।
इयेष पर्यायजयावसादां
रणक्रियां शंभुरनुक्रमेण ।।[1]

पार्यन्तिकोऽष्टादशः सर्गः पञ्चमसर्ग इव विविधैर्वृत्तैर्विनिबध्यते भारविणा । अत्रापि वर्णनानुगुण्यमेव रसापकर्षविरोधि कारणं प्रतिभाति । आदितः द्वादशश्लोकान्तं यद्वृत्तं तद्द्रुतविलम्बितं नाम । वृत्तेनाऽनेन विरचितैः पञ्चदशभिः श्लोकैर् निर्मिते कुलके क्वचिद् द्रुतवेगेनाऽन्यत्र च विलम्बितगत्या हिमाचलारोहणं धनञ्जयस्य वर्णितं कविना । अत्र हरकिरातेन समं धनञ्जयस्य मल्लयुद्धं वर्णयितुमिष्टम् । मल्लयुद्धे खलु कदाचिद् द्रुतवेगेन कदाचिच्च वेगविलम्बनेन चारप्रचारा मल्लप्रतिमल्लयोर्भवन्ति । तेषां वृत्तान्तरेण वर्णनं वर्णनाननुगुणमिति विचिन्त्य द्रुतविलम्बितेनैव वृत्तेन वर्णनं विधीयते भारविणा । तत्रादिम एव श्लोकः श्लोकद्वादशकस्य प्रातिनिध्यं कुर्वाणो दृश्यताम्—

---

१. तदेव, १७.१३-१८

तत उदग्र इव द्विरदे मुनौ
रणमुपेयुषि भीमभुजायुधे ।
धनुरपास्य सबाणधि शङ्करः
प्रतिजघान घनैरिव मुष्टिभिः ।।[1] इति ।

अर्जुनहरकिरातयोर्नियोधनं द्रुतविलम्बितवृत्तेन वर्णयित्वा वृत्तान्तरं विनिबध्नाति भारविर् वर्ण्यवस्त्वन्तरवर्णनानुरूपम् । अत एव त्रयोदशः श्लोको मध्यमपाण्डवस्य लोकातिशायिवीर्यशालित्वदर्शनाद् भगवतः शङ्करस्य प्रसन्नतां प्रकाशयितुं रथोद्धतावृत्तेन, चतुर्दशः श्लोकस्तमेव विषयं विशदयितुं प्रमिताक्षरा-वृत्तेन, पञ्चदशश्च श्लोकः शिवं प्रति शिवभक्तस्यार्जुनस्य प्रपन्नतां प्रकटयितु-मपरवक्त्राभिधेन वृत्तेन विरच्यते भारविणा ।

पञ्चमसर्ग इवात्राऽपि सर्गे निम्नोद्धृतः श्लोकः मत्तमयूरनामधेयेन वृत्तेन[2] विरचितो वृत्तस्य वर्णनानुगुण्यं संसूचयति—

दृष्ट्वा दृश्यान्याचरणीयानि विधाय
प्रेक्षाकारी याति पदं मुक्तमपायैः ।
सम्यग् दृष्टिस्तस्य परं पश्यति यस्त्वां
यश्चोपास्ते साधु विधेयं स विधत्ते ।।[3]

महाकविना कालिदासेनापि रघुवंशमहाकाव्ये मत्तमयूरं नाम वृत्तं वर्ण्य-विषयवर्णनावैचित्र्याधायकं प्रयुक्तम्—

हा तातेति क्रन्दितमाकर्ण्य विषण्णः
तस्यान्विष्यन् वेतसगूढं प्रभवं सः ।
शल्यप्रोतं वीक्ष्य सकुम्भं मुनिपुत्रं
तापादन्तः शल्य इवाऽसीत् क्षितिपोऽपि ।।[4]

---

१. तदेव, १८.१
२. मल्लिनाथ-व्याख्या, १८.२८
३. किरात०, १८.२८
४. रघुवंशम्, ९.१५

कालिदासनिबद्धे मत्तमयूरवृत्ते मेघागमे मत्तस्य स्वप्रियायाश्चासान्निध्यात् सखेदं चकितचकितं नृत्यतो मयूरस्य पदनिक्षेप इव वर्णानां निक्षेपो यया भावनया भाव्यमानः सुखयति सहृदयान् तथैव भारविनिबद्धे मत्तमयूरवृत्ते मेघागमे मत्तस्य प्रियादर्शनाच्च सानन्दं सविलासं नृत्यतो मयूरस्य चरणसंचरणमिव वर्णानां सञ्चरणं कल्पनया कल्पितं स्वदत एव सहृदयेभ्य इति—निर्विचिकित्सम् ।

अत एतन्निःसंदिग्धं निगमयितु शक्यं यन्महाकविकालिदास इव महाकविर्भारविरपि विविधवृत्तविशेषान् शासितुं वस्तुवर्णन-रसभावाभिव्यञ्जनानुगुणांश्च तान् यथेच्छं विनियोक्तुं समर्थ इति ।

—०—

## किरातकाव्ये भारवेस्तत्तत्प्रकरण-विरचनौचित्यवैचित्र्यम्

भारवेः किरातार्जुनीयं नाम महाकाव्यं धर्मयुद्धवीररसप्रबन्धात्मकम्। महाभारतान्तर्गतवनपर्वप्रकरणेभ्यो रसभावानुसारि यत्प्रकरणजातं भारविणा स्वप्रतिभाप्रसरेण वर्णनाविषयीकृतं तस्यौचित्यचारुत्ववैचित्र्यं प्राप्तविवेचनावसरमिति संक्षिप्तं विचार्यते। तथाहि योऽयं प्रथमः सर्गः किरातार्जुनीयमहाकाव्यस्य पीठिकाबन्धरूपेण निर्मितस्तस्य सूत्रं महाभारतस्थवनपर्वणि निम्नाङ्कितेषु श्लोकेषु दृश्यते। महाभारतस्य वनपर्वणि भीमयुधिष्ठिरपरिसंवादे कुरुराजस्य दुर्योधनस्य षाड्गुण्यप्रवणा नीतिरेवं प्रकाश्यते--

"धार्तराष्ट्रा दुराधर्षा दुर्योधनपुरोगमाः।
सर्व एव कृतास्त्राश्च सततं चाततायिनः॥

राजानः पार्थिवाश्चैव येऽस्माभिरुपतापिताः।
संश्रिताः कौरवं पक्षं जातस्नेहाश्च तं प्रति॥

दुर्योधनहिते युक्ता न तथाऽस्मासु भारत।
पूर्णकोशबलोपेताः प्रयतिष्यन्ति संगरे॥

सर्वे कौरवसैन्यस्य सपुत्रामात्यसैनिकाः ।
संविभक्ता हि मात्राभिर्भोगैरपि च सर्वशः ।।
दुर्योधनेन ते वीरा मानिताश्च विशेषतः ।
प्राणांस्त्यक्ष्यन्ति संग्रामे इति मे निश्चिता मतिः ।।''[1]

किन्तु भारविणा नानेन महाभारतप्रतिपाद्यवृत्तसम्भारेण किरातकाव्यस्य प्रथमसर्गात्मको भूमिकाबन्धो विधित्सितः । 'चारचक्षुषो राजानः' इति प्राचीन-भारतीयराजतन्त्रमनुसरन् भारविर् दुर्योधनस्य प्रजारञ्जन - युद्धसम्भारसमा-योजनादिव्यापारान् विज्ञातुं युधिष्ठिरेण प्रेषितस्य वर्णिलिङ्गिनो वनेचरस्य वृत्तान्तमासूत्रयति । इत्थं महाभारते वर्णितं युधिष्ठिरस्य भीमसेनेन सह संवादे गुप्तचर-युधिष्ठिरसंवादरूपेण विपरिणमय्य किरातकाव्यस्य नवमेव भूमिकाबन्धं विरचयति महाकविर्भारविः । किरातकाव्ये यो गुप्तचरो वर्णिलिङ्गी वनेचरः प्रारम्भ एव वर्णितस्स---

'वने वनेचराः कार्याः श्रमणाटविकादयः ।
परप्रवृत्तिज्ञानार्थाः शीघ्राश्चारपरम्पराः ।।[2]

इति राजशास्त्रापरनामककौटिल्यार्थशास्त्रे सम्यगनुमोदितः कोऽपि नयवर्त्मवेदी महामनस्वी राजदूत इव व्यवहरन् दृश्यते । एतत्तु तस्य निम्ननिर्दिष्टैर्वचनैरेव स्पष्टीभवति—

'द्विषां विघाताय विधातुमिच्छतो
रहस्यनुज्ञामधिगम्य भूभृतः ।
स सौष्ठवौदार्यविशेषशालिनीं
विनिश्चितार्थामिति वाचमाददे ।।'

'क्रियासु युक्तैर्नृप चारचक्षुषो
न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा
हितं मनोहारि च दुर्लभं वचः ।।,

१. महा० वन०, ३६.१०-१४
२. अर्थशास्त्र, १.६.११

'निसर्गदुर्बोधमबोधविक्लवाः
क्व भूपतीनां चरितं क्व जन्तवः ।
तवानुभावोऽयमवेदि यन्मया
निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥,

'विशङ्कमानो भवतः पराभवं
नृपासनस्थोऽपि वनाधिवासिनः ।
दुरोदरच्छद्मजितां समीहते
नयेन जेतुं जगतीं सुयोधनः ॥

'कृतारिषड्वर्गजयेन मानवी-
मगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तंदिवमस्ततन्द्रिणा
वितन्यते तेन नयेन पौरुषम् ॥,

'सखीनिव प्रीतियुजोऽनुजीविनः
समानमानान् सुहृदश्च बन्धुभिः ।
स सन्ततं दर्शयते गतस्मयः
कृताधिपत्यामिव साधु बन्धुताम् ॥,

'सुखेन लभ्या दधतः कृषीवलै-
रकृष्टपच्या इव सस्यसम्पदः ।
वितन्वति क्षेममदेवमातृका-
श्चिराय तस्मिन् कुरवश्चकासति ॥,

'महौजसो मानधना धनार्चिता
धनुर्भृतः संयति लब्धकीर्तयः ।
न संहतास्तस्य न भिन्नवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥,

'तदाशु कर्तुं त्वयि जिह्ममुद्यते
विधीयतां तत्र विधेयमुत्तरम् ।
परप्रणीतानि वचांसि चिन्वतां
प्रवृत्तिसाराः खलु मादृशां गिरः ॥'[१]

महर्षिणा महाकविना व्यासेन महाभारतस्य वनपर्वणि निम्नाङ्कितेषु श्लोकेषु द्वैतवनाख्यस्य सरोवरस्य मनोरञ्जकं रामणीयकं वर्ण्यते—

इदं द्वैतवनं नाम सरः पुण्यजलोचितम् ।
बहुपुष्पफलं रम्यं नानाद्विजनिषेवितम् ॥

'तमालतालाम्रमधूकनीप–
कदम्बसर्जार्जुनकर्णिकारैः ।
तपात्यये पुष्पधरैरुपेतं
महावनं राष्ट्रपतिर्ददर्श ॥,

महाद्रुमाणां शिखरेषु तस्थु-
र्मनोरमां वाचमुदीरयन्तः ।
मयूरदात्यूहचकोरसङ्घा-
स्तस्मिन् वने बर्हिणकोकिलाश्च ॥

करेणुयूथैस्सह यूथपानां
मदोत्कटानामचलप्रभाणाम् ।
महान्ति यूथानि महाद्विपानां
तस्मिन् वने राष्ट्रपतिर्ददर्श ॥

मनोरमां भोगवतीमुपेत्य
पूतात्मनां चीरजटाधराणाम् ।
तस्मिन् वने धर्मभृतां निवासे
ददर्श सिद्धर्षिगणाननेकान् ॥'[२]

---

१. किरात०, १.२,४,६,७,९,१०,१७,१९.२५

२. महा० वन०, २४.१०,१७-२०

भारवेरन्यः कोऽपि कविर् व्यासवर्णितं द्वैतवनमधिकृत्य, मन्ये, शब्दान्तरैर्वृत्तान्तरैश्चैतद् वनं वर्णयितुं लोभं संवरीतुमशक्त एव स्यात् । किन्तु महाकविर्भारविरेतद्वनवर्णनं विषयान्तरत्वाद् विघ्नमिव मन्वानः कार्यान्तरगौरवाद् वनेचरयुधिष्ठिरयो रहःसंलापमेव प्रकरणौचित्यौपयिकं प्रस्तौति । वनेचरयुधिष्ठिरयोः संवादे महाभारतस्य वनपर्वणः युधिष्ठिरकर्तृकभीमसेनप्रबोधनविषयकाणां पूर्वमुद्धृतानां श्लोकानाम् (३६.१०-१४) अभिप्रायाः पूर्वमुद्धृतैः स्वरचितैः नव्यतागुणगरिमवद्भिः श्लोकैः प्रकाशीकृता भारविणा ।

एतत्प्रकरणौचित्यचारुत्वमिव सन्तप्तहृदयद्रुपदात्मजाकर्तृकयुधिष्ठिराधिक्षेपप्रकरणमप्यग्रिमं सुतरामौचित्यं बिभ्रदेव स्वचारुत्वं विभावयति । महाभारते वनपर्वणि सप्तविंशेऽध्याये द्रौपद्या युधिष्ठिरं प्रति तदीयं शत्रुविषयं क्रोधमुद्दीपयितुं सन्तापपूर्णं निम्नोट्टङ्कितं वचनं श्रव्यतां हृदयग्राह्यतां चार्हति—

'प्रिया च दर्शनीया च पण्डिता च पतिव्रता ।
अथ कृष्णा धर्मराजमिदं वचनमब्रवीत् ॥,
'या त्वाहं चन्दनादिग्धमपश्यं सूर्यवर्चसम् ।
स त्वां पङ्कमलादिग्धं दृष्ट्वा मुह्यामि भारत ॥,
'या त्वाहं कौशिकैर्वस्त्रैः शुभ्रैराच्छादितं पुरा ।
दृष्टवत्यस्मि राजेन्द्र सा त्वां पश्यामि चीरिणम् ॥,
'भीमसेनमिमं चापि दुःखितं वनवासिनम् ।
ध्यायतः किं न मन्युस्ते प्राप्ते काले विवर्धते ॥,
'ध्यायन्तमर्जुनं दृष्ट्वा कस्माद्राजन् न कुप्यसि ।
दृष्ट्वा वनगतं पार्थमदुःखार्हं सुखोचितम् ॥,
'श्यामं बृहन्तं तरुणं चर्मिणामुत्तम रणे ।
नकुलं ते वने दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥,
'दर्शनीयं च शूरं च माद्रीपुत्रं युधिष्ठिर ।
सहदेवं वने दृष्ट्वा कस्मात् क्षमसि पार्थिव ॥,
'धृष्टद्युम्नस्य भगिनीं वीरपत्नीमनुव्रताम् ।
मां वै वनगतां दृष्ट्वा कस्मात् क्षमसि पार्थिव ॥,

'न निर्मन्युः क्षत्रियोऽस्ति लोके निर्वचनं स्मृतम् ।
तदद्य त्वयि पश्यामि क्षत्रिये विपरीतवत् ॥'[1]

द्रौपदीकर्तृकयुधिष्ठिरक्रोधोद्दीपन-शत्रुविजयव्यवसायप्रोत्साहनपरा इमे वनपर्वणः श्लोका महाकवेर्भारवेः प्रतिभातूलिकया संस्पृष्टाः सर्वथा नव्यभव्य-निर्माण इव किरातकाव्यस्य प्रथमसर्गवर्णितप्रकरणान्तरं सुतरां सच्छायीकुर्वन्ति। एतत्प्रकरणवक्रतां विद्योतयन्तः, एतत्प्रकरणध्वनिं वा निर्घोषयन्तः किरात-काव्यस्य कतिपये श्लोका हृदयङ्गमीकर्तुमर्हा इत्यध उल्लिख्यन्ते--

'निशम्य सिद्धिं द्विषतामपाकृती–
स्ततस्ततस्त्या विनियन्तुमक्षमा ।
नृपस्य मन्युव्यवसायदीपिनी–
-रुदाजहार द्रुपदात्मजा गिरः ॥,

'भवादृशेषु प्रमदाजनोदितं
भवत्यधिक्षेप इवानुशासनम् ।
तथापि वक्तुं व्यवसाययन्ति मां
निरस्तनारीसमया दुराधयः ॥,

'गुणानुरक्तामनुरक्तसाधनः
कुलाभिमानी कुलजां नराधिपः ।
परैस्त्वदन्यः क इवापहारयेन्
मनोरमामात्मवधूमिव श्रियम् ॥,

'परिभ्रमन् लोहितचन्दनोचितः
पदातिरन्तर्गिरिरेणुरूषितः ।
महारथः सत्यधनस्य मानसं
दुनोति नो कच्चिदयं वृकोदरः ॥,

---

१. तदेव, २७.२,१३,१४,२०,२७,३१,३२,३५,३७

'विजित्य यः प्राज्यमयच्छदुत्तरान्
कुरून कुप्यं वसु वासवोपमः ।
स वल्कवासांसि तवाधुना हरन्
करोति मन्युर्न कथं धनञ्जयः ॥,

'वनान्तशय्याकठिनीकृताकृती
कचाचितौ विष्वगिवागजौ गजौ ।
कथं त्वमेतौ धृतिसंयमौ यमौ
विलोकयन्नुत्सहसे न बाधितुम् ॥,

'इमामहं वेद्मि न तावकीं धियं
विचित्ररूपा खलु चित्तवृत्तयः ।
विचिन्तयन्त्या भवदापदां पदं
रुजन्ति चेतः प्रसभं ममाधयः ॥,

'पुराधिरूढः शयनं महाधनं
विबोध्यसे यः स्तुतिगीतिमङ्गलैः ।
अदभ्रदर्भामधिशय्य स स्थलीं
जहासि निद्रामशिवैः शिवारुतैः ॥,

'अनारतं यौ मणिपीठशायिना-
वरञ्जयद्राजशिरःस्रजां रजः ।
निषीदतस्तौ चरणौ वनेषु ते
मृगाद्विजालूनशिखेषु बर्हिणाम ॥,

'द्विषन्निमित्ता यदियं दशा ततः
समूलमुन्मूलयतीव मे मनः ।
परैरपर्यासितवीर्यसम्पदां
पराभवोऽप्युत्सव एव मानिनाम् ॥,

'न समयपरिरक्षणं क्षमं ते
निकृतिपरेषु परेषु भूरिधाम्नः ।
अरिषु हि विजयार्थिनः क्षितीशा
विदधति सोपधि सन्धिदूषणानि ॥,'[1]

यथा वनेचरयुधिष्ठिररहःसंवादप्रकरणे वर्णिलिङ्गिनो वनेचरस्य काप्यलौकिकी प्रवृत्तिरुन्मीलति, यत्र तस्य निर्यन्त्रणः उत्साहपरिस्पन्दो विभ्राजते तथैव द्रौपदीकर्तृकयुधिष्ठिरक्रोधोद्दीपनप्रकरणेऽत्राप्युपर्युद्धृते द्रौपद्याः लोकातिशायी युधिष्ठिरहृदये युद्धव्यवसायसंधुक्षणव्यापारः स्वमनीषितोल्लेखशाली विशदं विजृम्भमाणो विभाव्यते । प्रकरणद्वयमिदं किरातार्जुनीयमहाकाव्यरूपे महति रसप्रबन्धे स्वकीयां विच्छित्तिं समर्पयदपि स्वमहिम्नि विराजमानं प्रतिभाति । किरातमहाकाव्यस्य मुखसन्धिरूपं प्रकरणद्वयमिदम् । वनेचरवृत्तान्ते बीजोपक्षेपस्य द्रौपदीवचने च तत् परिकस्य वैचित्री वस्तुतः औचित्यावहेति निर्विवादम् ।

यथा पदवक्रिमा वाक्यवक्रिम्णि संक्रामति तथैव वाक्यवक्रता प्रकरणवक्रतायाम् । वाक्यवक्रतां विना प्रकरणविच्छित्तिर्न संभवितुं शक्नोति । किरातकाव्यस्य प्रथमसर्गगतं प्रकरणद्वयं तत्र तत्र प्रयुक्तैर् वक्रैर्बन्धुरैर्वा पदैर्विरचितानां वाक्यानां कदम्बकमिव विभ्राजते । यदि वाक्यशोभा न स्यात् प्रकरणशोभा कथमाविर्भवेत् ? तथा हि मौल एव श्लोके भारविणा वर्णनीयतया प्रस्तावितस्य वनेचरस्य यद्वर्णनं क्रियते तत्तस्य स्वाभाविकधर्मयुक्तत्वेनैव क्रियते । 'वर्णिलिङ्गीति 'विदित' इति विवक्षितार्थसमर्पणसमर्थाभ्यां पदाभ्यां वनेचरस्य स्वभावपरिस्पन्दसौन्दर्यं झगित्याभासते । वर्णिनो ब्रह्मचारिणो लिङ्गं चिह्नमस्यास्तीति वर्णिलिङ्गीति पदं वनेचरस्य गुप्तचरवेशभूषाचारित्रादि सम्यगभिव्यक्तुमलम् । एवमेव विदितं सर्वशात्रववृत्तान्तजातमस्ति यस्य स 'विदित' इति, विदिततत्तद्दुर्योधनादिव्यवसायो वा 'विदित' इति, सर्वं शत्रुहृन्निगूढभावजातं विदितवान् वा 'विदित' इति सर्वास्वेव व्युत्पत्तिविधासु वनेचरस्य वेदनसामर्थ्यस्वभावः सुष्ठु प्रतिपाद्यते । केवलं वृत्त्यनुप्रासयोजनयैव श्लोकोऽत्र नितरामपरिम्लानसौन्दर्यः शोभते । अलङ्कारान्तरयोजना वर्णनीयवनेचररूपपदार्थस्वभावपरिस्पन्दमधरीकुर्यादिति महाकविर्भारविस्ततो विरत इति स्पष्टमेव ।

---

१. किरात०, १.२७,२८,३१-३८,४१,४५

वनसन्निवासिनां पत्युर्वनेचरस्य गुप्तचरस्य युधिष्ठिरं प्रति या वाचोयुक्तिस्सा भारविणा धर्मादिसाधनोपायपरिस्पन्दवतीति मत्वा सविस्तरं प्रस्तूयते। अतएव वनेचरवचोम्भोऽमृतविन्दुमधुरोदारा निम्नलिखिताः सूक्तयो निरायासं निर्गलन्ति—

(१) न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः।[1]

(२) हितं मनोहारि च दुर्लभं वचः।[2]

(३) समुन्नयन् भूतिमनार्यसंगमाद्
वरं विरोधोऽपि समं महात्मभिः।[3]

(४) अहो दुरन्ता बलवद्विरोधिता।[4]

वनेचरव्यवहारवर्णनानन्तरं द्रौपद्या युधिष्ठिरस्य मन्युव्यवसायोद्दीपिन्य उक्तयो द्रौपदीचरितमलोकसामान्यं प्रकाशयन्त्यः किरातकाव्यारम्भस्य प्राणायिता इव प्रतिभान्ति। 'विधिसमयनियोगा'दित्यादि प्रथमसर्गस्यान्तिमं श्लोकवाक्यं युधिष्ठिरं प्रति द्रौपद्याः शुभाशंसाभिधानजीवितं पूर्णोपमालङ्कृतिश्रियः पृथगेव कर्तुर्भारवेः किमपि कविकर्मकौशलं प्रकाशीकुर्वद्वाक्यविच्छित्तेः प्रकारान्तरमेव प्रतिभाति। इत्थं किरातकाव्यवर्णितं प्रथमसर्गगतं वनेचरद्रौपदीसम्बद्धं प्रकरणद्वयं कुन्तकाचार्यदृशा वक्ताविच्छित्तिविशिष्टं वा स्यादानन्दवर्धनाचार्यदृशा भावाभिव्यञ्जनसामर्थ्ययुक्तं वा स्यात् सर्वथा भारवेः प्रतिभानिष्यन्दभूतमेवेति मन्तव्यं सुधीभिरिति।

किरातकाव्यस्य द्वितीयसर्गे स्वप्रतिभागुणप्रकाशकं प्रकरणद्वयं विनिर्मितं महाकविना भारविणा। तत्र प्रथमं भीमसेनकर्तृकयुधिष्ठिरविक्रमोत्साहसंधुक्षणस्वभावम्, द्वितीयं च युधिष्ठिरकर्तृकविक्रान्तभीमसेनोपसान्त्वनस्वरूपम्। प्रथमस्य प्रकरणस्य सूत्रपातः श्रीमन्महाभारतस्य वनपर्वणः निम्नाङ्कितैः श्लोकसन्दर्भैः कृतः—

---

१. तदेव, १.२
२. तदेव, १.४
३. तदेव, १.८
४. तदेव, १.२३

'याज्ञसेन्या वचः श्रुत्वा भीमसेनो ह्यमर्षणः ।
निःश्वसन्नुपसंगम्य क्रुद्धो राजानमब्रवीत् ॥
राज्यस्य पदवीं धर्म्यां व्रज सत्पुरुषोचिताम् ।
धर्मकामार्थहीनानां किं नो वस्तुं तपोवने ॥,
'भवतोऽनवधानेन राज्यं नः पश्यतां हृतम् ।
अहार्यमपि शक्रेण गुप्तं गाण्डीवधन्वना ॥
कुणीनामिव विल्वानि पङ्गूनामिव धेनवः ।
हृतमैश्वर्यमस्माकं जीवतां भवतः कृते ॥,
'भवान् धर्मो धर्म इति सततं व्रतकर्शितः ।
कच्चिन्न राजन् निर्वेदादापन्नः क्लीबजीविकाम् ॥
दुर्मनुष्या हि निर्वेदमफलं स्वार्थघातकम् ।
अशक्ताः श्रियमाहर्तुमात्मनः कुर्वते प्रियम् ॥,
'स क्षात्रं हृदयं कृत्वा त्यक्त्वेदं शिथिलं मनः ।
वीर्यमास्थाय कौरव्य धुरमुद्वह धुर्यवत् ॥
न हि केवलधर्मात्मा पृथिवीं जातु कश्चन ।
पार्थिवो व्यजयद्राजन् न भूतिं न पुनः श्रियम् ॥,
'न हि गाण्डीवमुक्तानां शराणां गार्धवाससाम् ।
स्पर्शमाशीविषाभानां मर्त्यः कश्चन संसहेत् ॥
न स वीरो न मातङ्गो न च सोऽश्वोऽस्ति भारत ।
यः सहेत गदावेगं मम क्रुद्धस्य संयुगे ॥,'[1]

३०तमेऽध्याये वनपर्वणः द्रौपद्या युधिष्ठिराधिक्षेपवचनम्—

'नमो धात्रे विधात्रे च यौ मोहं चक्रतुस्तव ।
पितृपैतामहे वृत्ते वोढव्ये तेऽन्यथा मतिः ॥,'[2]

इत्यादि शृण्वतो भीमसेनस्य प्रदीप्तामर्षप्रज्ज्वलितहृदयस्योपर्युद्धृतानि वचांसि महाकविना भारविणा सर्वथा नवयैव विधया विपरिणमय्य निकाम

---

१. महा०, वन०, ३३.१,२,६,७,१३,१४,५७,५८,८७,८८

२. तदेव, ३०.१

नव्यभव्यानि कृतानि । एतद्विषयकं भारवेः काव्यं सहृदयजनमनोरञ्जकमिति धियाऽधस्तादुल्लिख्यते—

'विहितां प्रियया मनःप्रिया-
मथ निश्चित्य गिरं गरीयसीम् ।
उपपत्तिमदूर्जिताश्रयं
नृपमूचे वचनं वृकोदरः ॥

यदवोचत वीक्ष्य मानिनी
परितः स्नेहमयेन चक्षुषा ।
अपि वागधिपस्य दुर्वचं
वचनं तद् विदधीत विस्मयम् ॥,

'परिणामसुखे गरीयसि
व्यथकेऽस्मिन् वचसि क्षतौजसाम् ।
अतिवीर्यवतीव भेषजे
बहुरल्पीयसि दृश्यते गुणः ॥

इयमिष्टगुणाय रोचतां
रुचिरार्था भवतेऽपि भारती ।
ननु वक्तृविशेषनिःस्पृहा
गुणगृह्या वचने विपश्चितः ॥

चतसृष्वपि ते विवेकिनी
नृप ! विद्यासु निरूढिमागता ।
कथमेत्य मतिर्विपर्ययं
करिणी पङ्कमिवावसीदति ॥

विधुरं किमतः परं परै—
रवगीतां गमिते दशामिमाम् ।
अवसीदति यत्सुरैरपि
त्वयि संभावितवृत्तिपौरुषम् ॥,

'विपदोऽभिभवन्त्यविक्रमं
रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायते-
रगरीयान्न पदं नृपश्रियः ॥

तदलं प्रतिपक्षमुन्नते-
रवलम्ब्य व्यवसायवन्ध्यताम् ।
निवसन्ति पराक्रमाश्रया
न विषादेन समं समृद्धयः ॥

अथ चेदवधिः प्रतीक्ष्यते
कथमाविष्कृतजिह्मवृत्तिना ।
धृतराष्ट्रसुतेन दुस्त्यजा-
श्चिरमास्वाद्य नरेन्द्रसंपदः ॥

द्विषता विहित त्वयाऽथवा
यदि लब्धा पुनरात्मनः पदम् ।
जननाथ ! तवानुजन्मनां
कृतमाविष्कृतपौरुषैर्भुजैः ॥

मदसिक्तमुखैर्मृगाधिपः
करिभिर्वर्तयते स्वयं हतैः ।
लघयन् खलु तेजसा जगन्-
-न महानिच्छति भूतिमन्यतः ॥,

'कुरु तन्मतिमेव विक्रमे
नृप ! निर्धूय तमः प्रमादजम ।
ध्रुवमेतदवेहि विद्विषां
त्वदनुत्साहहता विपत्तयः ॥

द्विरदानिव दिग्विभावितान्
    चतुरस्तोयनिधीनिवायतः ।
प्रसहेत रणे तवानुजान्
    द्विषतां कः शतमन्युतेजसः ॥

ज्वलतस्तव जातवेदसः
    सततं वैरिकृतस्य चेतसि ।
विदधातु शमं शिवेतरा
    रिपुनारीनयनाम्बुसंततिः ॥,[1]

उपर्युक्त महाकवेर्भारवेः किरातकाव्यस्य द्वितीयसर्गवर्ति भीमसेनकृत-युधिष्ठिरामर्षसमुत्तेजनात्मकं प्रकरणं वक्रोक्तिजीवितकारेण परिभाषितां निम्नाङ्कितां प्रकरणवक्रतां स्वैरमाविर्भावयद् विभाव्यते—

'प्रबन्धस्यैकदेशानां फलबन्धानुबन्धवान् ।
उपकार्योपकर्तृत्वपरिस्पन्दः परिस्फुरन् ॥
असामान्यसमुल्लेखप्रतिभाप्रतिभासिनः ।
सूते नूतनवक्रत्वरहस्यं कस्यचित् कवेः ॥,[2]

'सूते—समुन्मीलयति । किम् ? नूतनवक्रत्वरहस्यम्, अभिनववक्रभावोप-निषदम् । कस्यचित् न सर्वस्य कवेः (किन्तु) प्रस्तुतौचित्यचारुरचनाविचक्षण-स्येति यावत् । कः—उपकार्योपकर्तृत्वपरिस्पन्दः, अनुग्राह्यानुग्राहकत्वमहिमा । किं कुर्वन् ? परिस्फुरन् । किंविशिष्टः—फलबन्धानुबन्धवान्, प्रधानकार्यानु-संधानवान्, कार्यानुसन्धाननिपुणः । कस्यैवंविध इत्याह असामान्यसमुल्लेख-प्रतिभाप्रतिभासिनः निरुपमोन्मीलितशक्तिविभवभ्राजिष्णोः । केषाम् ? प्रबन्ध-स्यैकदेशानां प्रकरणानाम् । तदिदमुक्तं भवति—सन्निवेशशोभिनां प्रबन्धाव-यवानां प्रधानकार्यसंबन्धनिबन्धनानुग्राह्यग्राहकभावः स्वभावसुभगप्रतिभा-प्रकाश्यमानः कस्यचिद् विचक्षणस्य वक्रताचमत्कारिणः कवेरलौकिकं वक्रतोल्ले-खलावण्यं समुल्लासयति ।

---

१. किरात०, २. १,२,४,७,१४-१८,२२,२४

२, वक्रोक्ति०, उन्मेष ४-५,६

अत्रेदमवधारणीयं यन्महाभारतवनपर्वणि त्रयस्त्रिंशाध्याये भीमसेनगतो यः कोपविकारः परिस्फुरति तस्य कोऽप्यलौकिकः शोभातिशयभ्राजिष्णुर्विच्छित्तिविशेषोऽभिधीयते भारविणा येन नूतनच्छायामनोहारिणा वास्तवस्थितितिरोधानप्रवणेन निजावभासोद्भासिततत्स्वरूपेण तत्कालोल्लिखित इव वर्णनीयभीमसेनहृद्गतामर्षरूपपदार्थपरिस्पन्दः प्रतिभासते । अतएव महाकविकालिदासपदवीमनुगता भारविसदृशाः कवयो विधातृव्यपदेशपात्रतां प्रतिपन्नाः कथ्यन्ते—

'अपारे काव्यसंसारे कविरेव प्रजापतिः ।
यथास्मै रोचते विश्वं तथेदं परिवर्तते ।।'[१] इति ।

अत्र स्वाभाविकं भारवेर्निर्मातृनैपुण्यं शिक्षाभ्याससमुल्लासितेन व्युत्पत्तिपरिपाकप्रौढिमहिम्ना प्रतिपदं प्रतिवाक्यं च कामपि रमणीयतां निषिञ्चति । अतएव वृत्त्यनुप्रासरूपशब्दालङ्कारो निरायासं निर्मित इव शोभते, अर्थालङ्काराश्चैकावलीपर्यायोक्तिप्रभृतयो रसभावाभिनिविष्टचेतसो भारवेः प्रतिभयाऽपृथक्प्रयत्ननिर्वर्त्याश्चमत्कुर्वन्ति सहृदयमनांसीति ।

द्वितीयं यद् युधिष्ठिरकर्तृकभीमसेनविकारोपप्रशमनरूपं प्रकरणं तदपि प्रथमं प्रकरणं स्वशोभया शोभमानं कुर्वत् स्वात्मानमपि शोभाधिष्ठानं प्रदर्शयति । महाभारते वनपर्वणः चतुस्त्रिंशाध्याये प्रकरणस्यास्य चतुरचित्रकाररचितचित्रस्येव फलकायमाना अधोनिर्दिष्टाः श्लोका दृश्यन्ते—

'स एवमुक्तस्तु महानुभावः
सत्यव्रतो भीमसेनेन राजा ।
अजातशत्रुस्तदनन्तरं वै
धैर्यान्वितो वाक्यमिदं बभाषे ।।

असंशयं भारत ! सत्यमेतद्
यन्मां तुदन् वाक्यशल्यैः क्षिणोषि ।
न त्वां विगर्हे प्रतिकूलमेव
ममानयाद्धि व्यसनं व आगात् ।।,

---

१. ध्वन्यालोक ३. उद्धरण

'यन्तु नात्मा शक्यते पौरुषेण
मानेन वीर्येण च तात नद्धः ।
न ते वाचो भीमसेनाऽभ्यसूये
मन्ये तथा तद्‌भवितव्यमासीत् ।।,

'न त्वद्य शक्यं भरतप्रवीर
कृत्वा यदुक्तं कुरुवीरमध्ये ।
कालं प्रतीक्षस्व सुखोदयस्य
पक्तिं फलानामिव बीजवापः ।।,

'मम प्रतिज्ञां च निबोध सत्यां
वृणे धर्ममममृताज्जीविताच्च ।
राज्यं च पुत्राश्च यशो धनं च
सर्वं न सत्यस्य कलामुपैति ।।,[1]

अत्रैव फलके महाकविना भारविणा यद् युधिष्ठिरवचनविरचनचित्रं स्वप्रतिभावर्णिकया संरच्यते समुन्मील्यते च तद्दृश्यतामर्हति निम्नाङ्कितेषु श्लोकेषु—

'इति दर्शितविक्रियं सुतं
मरुतः कोपपरीतमानसम् ।
उपसान्त्वयितुं महीपति-
र्द्विरदं दुष्टमिवोपचक्रमे ।।,

अपवर्जितविप्लवे शुचौ
हृदयग्राहिणि मङ्गलास्पदे ।
विमला तव विस्तरे गिरां
मतिरादर्श इवाभिदृश्यते ।।

---

१, महा०, वन०, ३४.१,२,६,१९,२२

स्फुटता न पदैरपाकृता
न च न स्वीकृतमर्थगौरवम् ।
रचिता पृथगर्थता गिरां
न च सामर्थ्यमपोहितं क्वचित् ।।

उपपत्तिरुदाहृता बला-
दनुमानेन न चागमः क्षतः ।
इदमीदृगनीदृगाशयः
प्रसभं वक्तुमुपक्रमेत कः ।।

अवितृप्ततया तथापि मे
हृदयं निर्णयमेव धावति ।
अवसाययितुं क्षमाः सुखं
न विधेयेषु विशेषसम्पदः ।।

सहसा विदधीत न क्रिया-
मविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं
गुणलुब्धाः स्वयमेव सम्पदः ।।

अभिवर्षति योऽनुपालयन्
विधिबीजानि विवेकवारिणा ।
स सदा फलशालिनीं क्रियां
शरदं लोक इवाधितिष्ठति ।।

शुचि भूषयति श्रुतं वपुः
प्रशमस्तस्य भवत्यलङ्क्रिया ।
प्रशमाभरणं पराक्रमः
स नयापादितसिद्धिभूषणः ।।,

'किमसामयिकं वितन्वता
मनसः क्षोभमुपात्तरंहसः ।
क्रियते पतिरुच्चकैरपां
भवता धीरतयाऽधरीकृतः ।।

श्रुतमप्यधिगम्य ये रिपून्
विनयन्ते न शरीरजन्मनः ।
जनयन्त्यचिराय सम्पदा-
-मयशस्ते खलु चापलाश्रयम् ।।

अतिपातितकालसाधना
स्वशरीरेन्द्रियवर्गतापनी ।
जनवन्न भवन्तमक्षमा
नयसिद्धेरपनेतुमर्हति ।।

उपकारकमायतेर्भृशं
प्रसवः कर्मफलस्य भूरिणः ।
अनपायि निवर्हणं द्विषां
न तितिक्षासममस्ति साधनम् ।।,

'मतिमान् विनयप्रमाथिनः
समुपेक्षेत समुन्नतिं द्विषः ।
सुजयः खलु तादृगन्तरे
विपदन्ता ह्यविनीतसंपदः ।।,'[1]

प्रकरणमिदं व्यञ्जकमुखेन पदवाक्यादिवक्रिम्णा वा स्यात्, व्यङ्ग्यमुखेन नयवर्त्मोपदेशरूपेण वा स्यात्, सर्वथा न महाभारतकथामात्रमाश्रयति, अपितु निरन्तरं रसभावोद्गारगर्भसन्दर्भनिर्भरं भारवेरसामान्यसमुल्लेखप्रतिभारहस्यं परिपुष्णाति । 'इति दर्शितविक्रिय'-मित्यादिश्लोके भीमसेनस्य दुष्टद्विरदोपमा भीमसेनगतं लोकातिशायिशौर्यं नयबुद्धिराहित्यञ्चाभिव्यंक्तुमुपात्ता किमप्यौ-

---

१. किरात०, २.२५-३२,४०-४३,५२

चित्यं बिभर्ति । 'अपवर्जितविप्लवे' 'स्फुटता न पदैरपाकृता', 'उपपत्तिरुदाहृता बलादिति श्लोकत्रयं' यद्यपि भीमवचनस्य वैशिष्ट्यमाविष्कर्तुं विरचितम्, किन्तु भारवेः किरातकाव्यस्य वैशिष्ट्यमपि सहृदयेभ्यः सुतरां विद्योत्यत एवैतेन श्लोकत्रिकेण । 'सहसा विदधीते'त्यादि श्लोके निरायासमेव वैधर्म्येण साधर्म्येण च विमृश्यकारितायाः समर्थनाद् योऽर्थान्तरन्यासोऽभिलक्ष्यते सोऽपि मानवजीवनस्य व्यापकं क्षेत्रं क्रोडीकुर्वन् भारवेरपि किरातरचनायां विमृश्यकारित्वं निकाममभिव्यनक्ति । एवमेव 'शुचि भूषयति श्रुतं वपु'रित्यादौ श्लोके यदुत्तरोत्तरस्य पूर्वपूर्वविशेषणीभावोऽभिधीयते यत 'एकावली' त्याख्यः अलङ्कारो निर्मीयते तत्रापि कवेः रसभावसमाहितचेतस्कत्वान् काव्यालङ्कारयोजनायां प्रयत्नाभाव एव दृश्यते । 'उपकारकमायते' रित्यादौ च श्लोके 'तितिक्षासममित्यत्र समासगाया आर्थ्या लुप्तोपमायाः, 'उपकारकमायतेर्भृशम्,' 'अनपायि निबर्हणं द्विषाम्' इत्यत्र च व्यतिरेकालङ्कारस्य ध्वनिः किरातकाव्यस्य प्रकरणमिदं भूषयत्येव । अतएव ध्वनिकर्तुरानन्दवर्धनाचार्यस्य निम्ननिर्दिष्टो नवकाव्यनिर्माणविषयकः—

'दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात् ।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः ॥,'[1]

इति निर्णयः किरातार्जुनीयं नाम महाकाव्यं रसप्रबन्धेष्वन्यतमं सत्यापयतीति निश्चितमेव ।

किरातकाव्यस्य यः तृतीयः सर्गः स तु प्रथमद्वितीयसर्गवर्णितवस्तुनः विलक्षणस्य वर्णनीयस्य वर्णनाय विरचितो भारविणा । अत्र सर्गे य इतिवृत्तांशो नायकादिचरितरूपः कविकल्पितकथाशरीरश्च तस्य महाभारतान्तर्गतवनपर्वणः षट्त्रिंशाध्यायस्य निम्नाङ्किताः श्लोका आधारभूताः प्रतिभान्ति—

'तयोः संवदतोरेवं तदा पाण्डवयोर्द्वयोः ।
आजगाम महायोगी व्यासः सत्यवती सुतः ॥

सोऽभिगम्य यथान्यायं पाण्डवैः प्रतिपूजितः ।
युधिष्ठिरमिदं वाक्यमुवाच वदतां वरः ॥

---

१, ध्वन्यालोक, ४.४

युधिष्ठिर महाबाहो वेद्मि ते हृदयस्थितम् ।
मनीषया ततः क्षिप्रमागतोऽस्मि नरर्षभ ।।

भीष्माद् द्रोणात् कृपात् कर्णाद् द्रोणपुत्राच्च भारत ।
दुर्योधनान्नृपसुतात्तथा दुःशासनादपि ।।

यत्ते भयममित्रघ्न हृदि संपरिवर्तते ।
तत्तेऽहं नाशयिष्यामि विधिदृष्टेन कर्मणा ।।

तच्छ्रुत्वा धृतिमास्थाय कर्मणा प्रतिपादय ।
प्रतिपाद्य तु राजेन्द्र ततः क्षिप्रं ज्वरं जहि ।

तत एकान्तमुन्नीय पाराशर्यो युधिष्ठिरम् ।
अब्रवीदुपपन्नार्थमिदं वाक्यविशारदः ।।

श्रेयसस्ते परः कालः प्राप्तो भरतसत्तम ।
येनाभिभविता शत्रून् रणे पार्थो धनुर्धरः ।।

गृहाणेमां मया प्रोक्तां सिद्धिं मूर्तिमतीमिव ।
विद्यां प्रतिस्मृतिं नाम प्रपन्नाय ब्रवीमि ते ।।

यामवाप्य महाबाहुरर्जुनः साधयिष्यति ।
अस्त्रहेतोर्महेन्द्रं च रुद्रं चैवाभिगच्छतु ।।

वरुणं च कुबेरं च धर्मराजं च पाण्डव ।
शक्तो ह्येष सुरान् द्रष्टुं तपसा विक्रमेण च ।।

ऋषिरेष महातेजा नारायणसहायवान् ।
पुराणः शाश्वतो देवस्त्वजेयो जिष्णुरच्युतः ।।

अस्त्राणीन्द्राच्च रुद्राच्च लोकपालेभ्य एव च ।
समादाय महाबाहुर्महत्कर्म करिष्यति ।।,[1]

---

१. महा०, वन०, ३६.२२-३४

इमान् श्लोकान् तात्पर्यतोऽवबुध्य निम्नाङ्किता भारवेः प्रतिभाप्रसूता एतत्प्रसङ्गवर्णनपराः श्लोकास्सर्वथा नवनवा एव प्रतीयन्ते । आदौ तावन्महर्षेर्व्यासस्य वर्णनोपक्रमाय द्वितीयसर्गगतौ चतुष्पञ्चाशत्तमपञ्चपञ्चाशत्तमौ श्लोकौ दर्शनीयतामर्हतः—

'अनुशासतमित्यनाकुलं
नयवर्त्माकुलमर्जुनाग्रजम् ।
स्वयमर्थ इवाभिवाञ्छित-
स्तमभीयाय पराशरात्मजः ॥

मधुरैरवशानि लम्भय-
न्नपि तिर्यञ्चि शमं निरीक्षितैः ।
परितः पटुबिभ्रदेनसां
दहनं धाम विलोकनक्षमम् ॥'[1]

उपक्रान्तमिदं महर्षिव्यासवर्णनं तृतीयसर्गे प्रारम्भिकेण श्लोकचतुष्टयात्मकेन कलापकेन यदुपसंह्रियते तत्तु निकामं किञ्चिद्रम्यं काव्यमिव हृदयाह्लादकं विभाति—

'ततश्शरच्चन्द्रकराभिरामै-
रुत्सर्पिभिः प्रांशुमिवांशुजालैः ।
बिभ्राणमानीलरुचं पिशङ्गी-
र्जटास्तडित्वन्तमिवाम्बुवाहम् ॥

प्रसादलक्ष्मीं दधतं समग्रां
वपुःप्रकर्षेण जनातिगेन ।
प्रसह्य चेतस्सु समासजन्त-
मसंस्तुतानामपि भावमार्द्रम् ॥

---

१. किरात०, २.५४,५५

अनुद्धताकारतया विविक्तां
तन्वन्तमन्तःकरणस्य वृत्तिम् ।
माधुर्यविस्रम्भविशेषभाजा
कृतोपसंभाषमिवेक्षितेन ॥

धर्मात्मजो धर्मनिबन्धिनीनां
प्रसूतिमेनःप्रणुदां श्रुतीनाम् ।
हेतुं तदभ्यागमने परीप्सुः
सुखोपविष्टं मुनिमाबभाषे ॥'[1]

प्रथमद्वितीयसर्गयोः पर्यन्ते वीररसोदधौ निमग्नाः किन्त्वापाते सहृदयहृदयेषु समुद्वेगजनका मति-त्रास-वितर्कौग्र्यौत्सुक्यावेगप्रभृतयो व्यभिचारिभावाः कल्लोलवत् प्रचण्डताण्डवं कुर्वाणा व्यासागमनवर्णनेऽसन्त इवावभासमाना भारवेर् महाकविकर्मकौशलं प्रकाशयन्ति ।

नैरन्तर्येणोत्तरोत्तरं मनःसंक्षोभका व्यभिचारिण एव यदि वर्ण्येरन् तर्हि वैरस्यमेवावहेरन् । अत एव महाकविर्भारविर्मनःप्रशमननिबन्धनाय महर्षिव्यासं वर्णनाय प्रक्रमते । महर्षेर्व्यासस्य वर्णनेनैतादृशेनेदमनुमातुं शक्यते यत्कश्चन माधुर्यविस्रम्भविशेषभाजोक्षितेनैव कृतोपसंभाषोऽसंस्तुतानामपि जनानां चेतस्सु प्रसह्यार्द्रभावं निषिञ्चिन् तपःपूतो महात्मा भारविणा साक्षात्कृतो भवेत् । तमेव स्मृतिपथमानीय भारविणा महर्षिर्व्यासोऽत्र जनातिशायिना वपुःप्रकर्षेण प्रसादलक्ष्मीं दधानो वर्णनाविषयीकृतः । नेदं व्यासमहर्षिवर्णनं 'महायोगी व्यासः सत्यवतीसुतः' इति महाभारतकृतव्यासवर्णनस्य समुपबृंहणं भवितुमर्हम् । महाकविना माघेन शिशुपालवधमहाकाव्यस्य प्रथमसर्गे यन्नारदमहर्षिवर्णनं भारविकृतव्यासमहर्षिवर्णनप्रतिस्पर्द्धि विशदरूपेण कृतं तत्र माघमहाकवेश्चतुर्दशविद्यास्थानपरिचयचारुत्वं प्रकामं प्राकाश्यमृच्छेत् किन्तु भारविकृतस्य व्यासवर्णनसौन्दर्यस्य षोडशीमपि कलामधिकर्तुं नार्हति । यदस्तु तदस्तु विषयान्तरावगाहनमिदमिति ततो विरम्यते ।

अत्र सर्गे महर्षिव्यासकृतयुधिष्ठिरप्रबोधनप्रकरणं भारविणा वस्तुनेतृरसभावानुगुण्येन विरचितं किरातार्जुनीयमहाकाव्यस्याऽष्टादशसर्गात्मकस्य प्रथम-

---

१. तदेव, ३.१-४

षट्के नितरां रमणीयं सहृदयहृदयावर्जकं च विभासते। किरातकाव्यस्य प्रथमद्वितीयसर्गयोर्मुखसन्धेरुपक्षेपपरिकरप्रभृतीनामङ्गानां विन्यासानन्तरं तृतीयसर्गे प्राप्ति-परिभावना विधानरूपाणामङ्गानां विनिवेशनेन भारविणा वस्तुतो व्यासयुधिष्ठिरसंवादसंबन्धि महाभारतान्तर्वर्ति सर्वमाख्यानं स्वप्रतिभा-प्रसरेण नवीकृतमिव समुपन्यस्यते। प्रमाणरूपेण कतिपये काव्यकामनीयक-भृतस्तत्रत्याः श्लोका अध उल्लिखिता द्रष्टव्या एव सहृदयैः—

'इत्युक्तवानुक्तिविशेषरम्यं
मनःसमाधाय जयोपपत्तौ।
उदारचेता गिरमित्युदारां
द्वैपायनेनाऽभिदधे नरेन्द्रः॥

'पथश्च्युतायां समितौ रिपूणां
धर्म्यां दधानेन धुरं चिराय।
त्वया विपत्स्वप्यविपत्तिरम्य-
-माविष्कृतं प्रेम परं गुणेषु॥

विधाय विध्वंसमनात्मनीनं
शमैकवृत्तेर्भवतश्छलेन।
प्रकाशितत्वन्मतिशीलसाराः
कृतोपकारा इव विद्विषस्ते॥

लभ्या धरित्री तव विक्रमेण
ज्यायांश्च वीर्यास्त्रबलैर्विपक्षः।
अतः प्रकर्षाय विधिर्विधेयः
प्रकर्षतन्त्रा हि रणे जयश्रीः॥'[1]

अत्र पञ्चदशसंख्यातः सप्तदशसंख्यापर्यन्तास् त्रयः श्लोका महाकवेर्भारवेः प्रतिभानिबन्धिनीं कामपि क्रान्तदर्शितां समुन्मीलयन्तः सहृदयानां सम्भावना-मर्हन्ति। अद्यत्वे भारतगणतन्त्रस्य शमैकवृत्तेः प्रत्यहं छलेनानात्मनीनं विध्वंसं विधातुकामाः पाकचीनप्रभृतयो राष्ट्रपूगा वीर्यास्त्रबलैर्ज्यायांसो यत् कुचात्रि-

१. तदेव, ३.१०,१५-१७

कत्वमाचरन्ति यतश्च भारतस्य मतिशीलसारगुणाः प्रकाशिता भवन्ति, किञ्च 'प्रकर्षतन्त्रा हि रणे जयश्री' रिति मन्त्रशवत्या भारतगणतन्त्रकर्णधाराः प्रकर्षाय विधेयेषु विधिषु व्यापृता दृश्यन्ते तत्सर्वमभिव्यज्यत एवाऽनेन श्लोकत्रयेणेति नातितिरोहितं सुधियां सचेतसाम् ।

इतोऽग्रे ये श्लोकास् तेषां नव्यता रम्यता च दर्शनीया ध्यातव्या च—

'यस्मिन्ननैश्वर्यकृतव्यलीकः
परामवं प्राप्त इवाऽन्तकोऽपि ।
धुन्वन् धनुः कस्य रणे न कुर्यान्
मनो भयैकप्रवणं स भीष्मः ॥

सृजन्तमाजाविषुसंहतीर्वः
सहेत कोपज्वलितं गुरुं कः ।
परिस्फुरल्लोलशिखाग्रजिह्वं
जगज्जिघत्सन्तमिवान्तवह्निम् ॥

निरीक्ष्य संरम्भनिरस्तधैर्यं
राधेयमाराधितजामदग्न्यम् ।
असंस्तुतेषु प्रसभं भयेषु
जायेत मृत्योरपि पक्षपातः ॥,'[1]

एतेषां नितरां क्षीणा रूपरेखा महाभारतगतवनपर्वणः षट्त्रिंशाध्यायगतेषु निम्नाङ्कितेषु श्लोकेषु यथाकथञ्चिद् द्रष्टुं शक्या—

युधिष्ठिर उवाच—

समा यद्यपि भीष्मस्य वृत्तिरस्मासु तेषु च ।
द्रोणस्य च महाबाहो ! कृपस्य च महात्मनः ॥

अवश्यं राजपिण्डस्तैर्निर्वेश्य इति मे मतिः ।
तस्माद् यक्ष्यन्ति संग्रामे प्राणानपि सुदुस्त्यजान् ॥

---

१. तदेव, ३.१९-२१

सर्वे दिव्यास्त्रविद्वांसः सर्वे धर्मपरायणाः ।
अजेयाश्चेति मे बुद्धिरपि देवैः सवासवैः ।।

अमर्षी नित्यसंरब्धस्तत्र कर्णो महारथः ।
सर्वास्त्रविदनाधृष्यो ह्यभेद्यकवचावृतः ।।

अनिर्जित्य रणे सर्वानेतान् पुरुषसत्तमान् ।
अशक्यो ह्यसहायेन हन्तुं दुर्योधनस्त्वया ।।

न निद्रामधिगच्छामि चिन्तयानो वृकोदर ।
अति सर्वान् धनुर्ग्राहान् सूतपुत्रस्य लाघवम् ।।,[१]

उपरि निर्दिष्टा क्षीणा वर्णनीयचरितरूपरेखा महाकवेर्भारवेः प्रतिभातूलिकाकलया तथोन्मीलिता यत्सर्वथाऽभिनवरामणीयकरञ्जिता चेतश्चमत्कारकरी च प्रतिभाति । 'यस्मिन्ननैश्वर्ये' त्यादौ श्लोकेऽत्यन्तमतीतस्यापि भीष्मचरितस्य यत्प्रत्यक्षायमाणत्वं तद्भाविकालङ्कारस्य काञ्चन विचित्रां विच्छित्तिमुद्भावयति । एवमेव 'सृजन्तमाजा'-वित्यादि श्लोको द्रोणाचार्यचरितस्योदात्तत्वमुद्योतयन्नुल्लेखालङ्कारस्योद्भावनां कुर्वन् विभाव्यते । 'निरीक्ष्य संरम्भे'त्यादि श्लोके च जायेतेति सम्भावनायां लिङ्लकारेण 'मृत्युरपि कर्णाद् विभीयात् किमुतान्य' इति रम्यं कर्णचरितरूपं वस्तु ध्वनत् सर्वमेव श्लोकवाक्यं पुनानमिव प्रतिभाति । अत्रैव भयसम्बन्धरहितस्य मृत्योर्भयसंबन्धाभिधानतोऽसंबन्धे संबन्धरूपाऽतिशयोक्तिर् एकतः सर्वातिशायिनः स्वाभाविकशौर्यवीर्यसौभाग्यसम्पल्लक्षणस्य कर्णचरितरूपपदार्थस्यालङ्कार्यतां परिपुष्यति, अपरतश्च स्वस्य प्रस्तुतौचित्यानुरोधेन रमणीयमलङ्करणभावं प्रकाशयति ।

अस्तु, महर्षिणा व्यासेन पार्थाय प्रदत्तामिन्द्रमन्त्ररूपां विद्यां वर्णयन् भारविर्महाकविरेवं वक्ति पञ्चविंशषड्विंशयोश्श्लोकयोः—

'निर्याय विद्याऽथ दिनादिरम्याद्
बिम्बादिवार्कस्य मुखान्महर्षेः ।
पार्थाननं वह्निकणावदाता
दीप्तिः स्फुरत्पद्ममिवाभिपेदे ।।

१. महा०, वन०, ३६.१५-२०

योगं च तं योग्यतमाय तस्मै
तपःप्रभावाद् वितताार सद्यः ।
येनाऽस्य तत्त्वेषु कृतेऽवभासे
समुन्मिमीलेव चिराय चक्षुः ॥,[1]

अत्रापि या सौष्ठवौदार्यविशेषरम्या वाचोयुक्तिस्सा महाभारतवनपर्वणः श्लोके न सर्वर् द्रष्टुं शक्यते किन्तु भारवेः प्रतिभा तत एव समुन्मीलितेति तु निश्चितमेव ।

महर्षिणा व्यासेन प्रदत्तविद्यावदातीकृतचेतसि पार्थे तपस्तप्तुं हिमवन्तं गन्तुमुद्यते युधिष्ठिरप्रमुखाणां चतुर्णां पाण्डवानां द्रुपदात्मजायाश्च प्रियार्जुनाया वियोगदुःखं यद् वर्णयति भारविस्तत्प्रकरणमपि नितरां हृदयस्पर्शि रसभावाव-हञ्चेति निम्नाङ्कितैः श्लोकैः स्पष्टीभवति—

'अथोष्णभासेव सुमेरुकुञ्जान्
विहीयमानानुदयाय तेन ।
बृहद्द्युतीन् दुःखकृतात्मलाभं
तमः शनैः पाण्डुसुतान् प्रपेदे ॥

असंशयालोचितकार्यनुन्नः
प्रेम्णा समानीय विभज्यमानः ।
तुल्याद् विभागादिव तन्मनोभि-
र्दुःखातिभारोऽपि लघुः स मेने ॥

धैर्येण विश्वास्यतया महर्षे-
स्तीव्रादरातिप्रभवाच्च मन्योः ।
वीर्यं च विद्वत्सु सुते मघोनः
स तेषु न स्थानमवाप शोकः ॥

---

१. किरात०, ३.२५-२६

तान् भूरिधाम्नश्चतुरोऽपि दूरं
विहाय यामानिव वासरस्य ।
एकौघभूतं तदशर्म कृष्णां
विभावरीं ध्वान्तमिव प्रपेदे ॥

तुषारलेखाकुलितोत्पलाभे
पर्यश्रुणी मङ्गलभङ्गभीरुः ।
अगूढभावाऽपि विलोकने सा
न लोचने मीलयितुं विषेहे ॥,[1]

अत्र 'अथोष्णभासे' त्यादौ श्लोके 'उष्णभासे' त्येकस्मिन् पदे तत्संसर्गिणि पदकदम्बकरूपे वाक्ये च बहवो वक्रताप्रकारा व्यञ्जकविशेषा वा कविप्रतिभा-महिम्नैव समुल्लसिताः परस्परस्य शोभां वर्धयन्तो दृश्यन्ते । एवमेव 'असंशया-लोचिते'त्यादि श्लोके यथाऽनेकधा विभज्य बहुभिरुह्यमानो भारो लघुर्भवतीति-रूपाऽर्थव्यक्तिः समस्तं श्लोकवाक्यं सच्छायीकरोति । 'धैर्येण विश्वास्यतये'-तिश्लोकः पार्थवियोगे शोकनिमग्नानपि पाण्डवान् निःशोकान् वर्णयन् निरलङ्कारोऽपि प्रसन्नपदप्रभावात् प्रकरणममुं सुतरामलङ्करोति । 'तान् भूरिधाम्नः' इत्यादौ च श्लोके द्रौपदीपर्यायं कृष्णेतिपदं विभावरीतिपदेन श्लेष-महिम्ना सङ्गतं द्रौपद्याः शोकसन्तमसावृतत्वं निःसंशयं प्रत्याययति । अत एव 'तुषारलेखे' त्यादिश्लोके 'तुषारलेखाकुलितोत्पलाभे' इत्युपमालङ्कारः 'पर्यश्रुणी-लोचने' इतिपदार्थस्यालङ्क्रियमाणतां विभावयन् किमप्यौचित्यचारुत्वं प्रकाश-यति । वाक्यविच्छित्तिः प्रकरणविच्छित्तौ सार्थकतां बिभर्तीति काव्य-विच्छि-त्तिन्यायः सुतरामत्र युक्तियुक्तश्चकास्ति ।

एतदनन्तरं द्रौपद्या परावमाननामसहमानायाः पार्थवियोगे च दुःखित-हृदयाया यदुक्तिविशेषप्रकरणं तद्वक्रोक्तिजीवितकारस्य निम्नाङ्कितं प्रकरण-वक्रतासिद्धान्तं प्रमाणीकुर्वदिव प्रतिभाति—

'प्रधानवस्तुनिष्पत्त्यै वस्त्वन्तरविचित्रता ।
यत्रोल्लसति सोल्लेखा साऽपराप्यस्य वक्रता ॥'[2]

---

१. तदेव, ३२-३६
२. वक्रोक्तिजीवितम् ४.११

दृश्यन्तां दृष्टान्तीभूता एतत्प्रकरणवर्तिनः कतिपये श्लोकाः —

'अकृत्रिमप्रेमरसाभिरामं
रामार्पितं दृष्टिविलोभि दृष्टम् ।
मनःप्रसादाञ्जलिना निकामं
जग्राह पाथेयमिवेन्द्रसूनुः ॥

धैर्यावसादेन हृतप्रसादा
वन्यद्विपेनेव निदाघसिन्धुः ।
निरुद्धवाष्पोदयसन्नकण्ठ-
मुवाच कृच्छ्रादिव राजपुत्री ॥

मग्नां द्विषच्छद्मनि पङ्कभूते
सम्भावनां भूतिमिवोद्धरिष्यन् ।
आधिद्विषामा तपसां प्रसिद्धे-
रस्मद्विना मा भृशमुन्मनीभूः ॥

यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः ॥,

वीर्यावदानेषु कृतावमर्ष-
स्तन्वन्नभूतामिव संप्रतीतिम् ।
कुर्वन् प्रयामक्षयमायतीना-
मर्कत्विषामह्न इवावशेषः ॥

प्रसह्य योऽस्मासु परैः प्रयुक्तः
स्मर्तुं न शक्यः किमुताधिकर्तुम् ।
नवीकरिष्यत्युपशुष्यदार्द्रः
स त्वद्विना मे हृदयं निकारः ॥,

'दुःशासनामर्षरजोविकीर्णै-
रेभिर्विनाथैरिव भाग्यनाथैः ।
केशैः कदर्थीकृतवीर्यसारः
कच्चित्स एवाऽसि धनञ्जयस्त्वम् ॥,

'प्रियेषु यैः पार्थ विनोपपत्ते-
र्विचिन्त्यमानैः क्लममेति चेतः ।
तव प्रयातस्य जयाय तेषां
क्रियादधानां मघवा विघातम् ॥

'तदाशु कुर्वन् वचनं महर्षे-
र्मनोरथान्नः सफलीकुरुष्व ।
प्रत्यागतं त्वाऽस्मि कृतार्थमेव
स्तनोपपीडं परिरब्धुकामा ॥,'[1]

उपर्युक्तं प्रकरणं विचारपदवीमानीतं सन् महाकवेर्भारवेः कमनीयवस्तुव्यसनितां व्यनक्ति । कालिदासकाव्यं यथा सहजसौकुमार्यसुभगं न तथा भारवेः काव्यम् । भारविः कालिदासकाव्यमादर्शं मन्वानः किरातार्जुनीयं महाकाव्यं रचयितुमुद्युक्तः । किन्तु भारवेर्युगे कालिदासस्य सुकुमारकाव्यमार्गादन्योऽपि विचित्रकाव्यमार्गः प्रतिभाधनैः कविभिः प्रवर्तितोऽभवदित्यनुमातुं शक्यते । भारविणा सुकुमारविचित्रयोः काव्यमार्गयोर्मध्यवर्ती मार्गद्वयसम्पत्सम्पन्नो मध्यमाख्यः काव्यमार्गः स्ववाक्संचरणाय समनोभियोगं स्वीकृतः । सुकुमारमार्गस्य वैशिष्ट्यानि निम्नाङ्कितानि वक्रोक्तिजीवितकारेण वक्रोक्तिजीविते प्रथमोन्मेषे २५–२९ कारिकासु निर्दिष्टानि—

(क) अम्लानप्रतिभोद्भिन्ननवशब्दार्थबन्धुरत्वम् ।
(ख) अयत्नविहितस्वल्पमनोहारिविभूषणत्वम् ।
(ग) भावस्वभावप्राधान्यन्यक्कृताहार्यकौशलत्वम् ।
(घ) रसादिपरमार्थज्ञमनःसंवादसुन्दरत्वम् ।
(ङ) अविभावितसंस्थानरामणीयकरञ्जकत्वम् ।

---

१. तदेव, ३.३७-४०,४३,४४,४७,५२,५४

विचित्रमार्गस्य च तेनैवाधोलिखितानि (वक्रोक्तिजीविते प्रथमोन्मेषे ३४–४२ कारिकासु) वैशिष्ट्यानि निरूपितानि—

(क) प्रतिभाप्रथमोद्भेदसमय एव शब्दाभिधेययोरन्तःस्फुरद्वक्रता-विच्छित्तिः ।

(ख) हारादिमणिबन्धन्यायेनाऽलङ्कारस्याऽलङ्कारान्तरनिबन्धनम् ।

(ग) अनूतनोल्लेखवस्तुनोऽप्युक्तिवैचित्र्यमात्रेण नूतननिर्माण-संरम्भः ।

(घ) भावानां सरसाकूतस्य स्वभावस्य केनापि कमनीयेन वैचित्र्येणोप-बृंहणम् ।

(ङ) विदग्धकविजनप्रियत्वम् ।

एतयोर्द्वयोर्मार्गयोर् वैशिष्ट्यानां सङ्कीर्णतायां मध्यममार्गस्य वैशिष्ट्यं तेनैव वक्रोक्तिजीविते प्रतिपादितम्—

'वैचित्र्यं सौकुमार्यञ्च यत्र सङ्कीर्णतां गते ।
भ्राजेते सहजाहार्यशोभातिशयशालिनी ॥

माधुर्यादिगुणग्रामो वृत्तिमाश्रित्य मध्यमाम् ।
यत्र कामपि पुष्णाति बन्धच्छायातिरिक्तताम् ॥

मार्गोऽसौ मध्यमो नाम नानारुचिमनोहरः ।
स्पर्द्धया यत्र वर्तन्ते मार्गद्वितयसम्पदः ॥

अत्रारोचकिनः केचिच्छायावैचित्र्यरञ्जके ।
विदग्धनेपथ्यविधौ भुजङ्गा इव सादराः ॥'[1]

यथा काव्यस्य सुकुमारमार्गानुगामिषु महाकविः कालिदासः प्रथमस्तथैव काव्यस्य मध्यममार्गानुगामिषु भारविर्महाकविः प्रथम इति मन्तव्यं सुधीभिः । किरातकाव्यस्योपरितनेन प्रकरणेनान्यैश्च प्रतिसर्गगतैर्नानाप्रकरणैः स्पष्टमेव प्रतीयते महाकवेर्भारवेर् मध्यमकाव्यमार्गानुवर्तनम् । काव्यस्य मध्यममार्गे मार्गद्वितय इव पदवाक्यप्रकरणप्रबन्धानां व्यापकत्वेन विराजमानमौचित्य-सौभाग्यरूपं गुणद्वयं किरातार्जुनीयमहाकाव्येऽन्तर्व्याप्तं विभाति । तत्रौचित्यं

---

१. वक्रोक्ति०, १,४९-५२

नाम स गुणो येन स्वभावस्य पदार्थस्य महत्त्वं परिपोषं प्राप्यते। तत्राभिधा-वैचित्र्यं निदानम्। अभिधावैचित्र्यञ्चोदाराभिधानरूपमेतादृशे काव्ये सर्वत्र दृष्टचरम्। एतदानुगुण्येनैव विभूषणविन्यासः काञ्चन विच्छित्तिमावहति। काव्याभिधानस्य वस्तुनो यो गुणः सौभाग्यमित्युच्यते स तु शब्दाद्युपेयसमुदाये कवेः प्रतिभाशवतः सम्यक् संरम्भरूपो व्यवसायरूपो वा। एतच्च सौभाग्यं न प्रतिभासंरम्भमात्रसम्पाद्यम्, किन्तु तद्विहितसमस्तसामग्रीसंसाध्यम्। अत एवोच्यते वक्रोक्तिजीवितकृता—

'सर्वसंपत्परिस्पन्दसम्पाद्यं सरसात्मनाम्।
अलौकिकचमत्कारकारि काव्यैकजीवितम्॥'[1]

किरातार्जुनीयस्य महाकाव्यस्य तृतीयसर्गे द्रौपदीवचनरूपपरिस्पन्दस्य यद्वैचित्र्यं तदर्जुनकर्तृकतपश्चरणतज्जन्यपाशुपतास्त्रप्राप्तितत्कृतशत्रुसंहार-रूपस्य प्रधानवस्तुनः निष्पत्त्यै समुल्लसन्ति ततः सर्वमिदं प्रकरणं सच्छायी-क्रियते। तथाहि 'अकृत्रिमप्रेमरसाभिरामम्'[2] इत्यादौ श्लोके सत्स्वपि पदान्त-रेषु रामेति हृदयाह्लादाभिव्यञ्जनसमर्थेन पदेन, मनःप्रसादाञ्जलिनेत्युपमित-समासवत्पदसन्दर्भेण, 'धैर्यावसादेन'[3] इत्यादौ श्लोके पदान्तरेषु विद्यमानेष्वपि 'राजपुत्री'ति क्षात्रधर्मधुरन्धरत्वाद्यभिव्यञ्जकपदेन, 'निरुद्धबाष्पोदयसन्नकण्ठम्' इति क्रियाविशेषणयोर्विशेषणसमासेन, समस्ताभ्यां पदाभ्यां 'क्रीडानतैः'[4] इत्यादिश्लोके दिग्विकीर्णं यशःसमूहमिवेत्युत्प्रेक्षालङ्कारेण, 'वीर्यावदानेषु'[5] इत्यादौ श्लोके श्रौत्या पूर्णोपमया, 'प्रसह्य'[6] इत्यादौ शोपादिविशेषणसाम्याद् व्रणाद्यप्रस्तुतार्थप्रतीतेः समासोक्त्यलङ्कारेण, 'दुःशासनामर्ष'[7] इत्यादौ श्लोके विनाथैरिव भाग्यनाथैरित्युत्प्रेक्षया च भारविकाव्यप्रकरणस्याऽस्य प्रतिभा-

---

१. तदेव, ५६
२. किरात०, ३.३७
३. तदेव, ३.३८
४. तदेव, ३.४२
५. तदेव, ३.४३
६. तदेव, ३.४४
७. तदेव, ३.४७

संरम्भजनितसकलसामग्रीसनुन्मीलितं सहृदयहृदयाह्लादजनकं किमपि सौभाग्यं समुद्भासमानं विलोक्यते ।

सर्गस्यास्याऽन्तिमः षष्टिसंख्याकः श्लोको हिमालयमार्गं प्रति गुह्यकेनालकाधिपभृत्येन सह गच्छतः पार्थस्य तपःसम्पूर्ति–तत्करिष्यमाण शत्रुविजय-शुभाशंसनमाशंसमान एवं रचितो भारविणा—

'अनुजगुरथ दिव्यं दुन्दुभिध्वानमाशाः
सुरकुसुमनिपातैर्व्योम्नि लक्ष्मीर्वितेने ।
प्रियमित्र कथयिष्यन्नालिलिङ्ग स्फुरन्तीं
भुवमनिभृतवेलावीचिबाहुः पयोधिः ॥,'[1]

अत्र विशेषणमात्रसाम्यादप्रस्तुतस्य प्रतीतेः समासोक्तिरलङ्कारो विचार्यमाणरमणीयः प्रतिभाति । यतो हि भूमिसमुद्रयोरप्रस्तुतयोर्नायिकाभ्यां भेदेऽभेदलक्षणातिशयोक्तिमहिम्नाऽऽलिङ्गनोक्तेरौचित्यं स्पष्टीभवति । एवमतिशयोक्त्यनुप्राणितायाः समासोक्तेर् बन्धात् श्लोकवाक्यमिदं काव्यायमानं पार्थविजयस्यावश्यम्भाविताममिव्यनक्तीति सर्वमवदातम् ।

चतुर्थः सर्गः शरद्वर्णनपरः । महाभारत एतर्हि प्रसङ्गे क्वापि शरदृतुवर्णनं न दृश्यते । किं प्रयोजनमुद्दिश्य महाकविना भारविणा शरच्छोभा वर्ण्यत इति भवति जिज्ञासा । धनञ्जयः शत्रुविजयाय देवेन्द्रं प्रसाद्य तदादेशेन च महादेवं शङ्करमाराधयितुकामो हिमवन्तं प्रति गच्छन् कवेर्वर्णनाविषयीभूतः । राजभिः शत्रुविजयाय शरदि यात्रा कर्तव्येति प्राचीनः समयः । तमेव स्मृतिपथमानीय भारविरत्र पार्थस्य विजययात्राकालं शरदृतुवर्णने प्रवृत्त इति प्रतीयते । तत्र सर्गारम्भक एव श्लोको द्रष्टव्यो यत्र शरदागमो न साक्षाच्छब्दैर्वर्ण्यतेऽपितु नवयैव विधया शरत्प्रभाव-प्रदर्शनपरया—

'ततः स कूजत्कलहंसमेखलां
सपाकशस्याहितपाण्डुतागुणाम् ।
उपाससादोपजनं जनप्रियः
प्रियामिवासादितयौवनां भुवम् ।'[2]

---

१. तदेव, ३.६०
२. तदेव, ४.१

अत्र महाकविर्भारविः शृङ्गाररसस्य सकलजनमनोहराभिरामत्वात् तदङ्गसमावेशः काव्ये शोभातिशयं पुष्णातीति विचिन्त्योपमायोजनया शृङ्गाररसाङ्गं विनियोजयतीति मन्तव्यम् । अन्येषां कवीनां शरद्वर्णनमन्यादृशम्, भारवेस्तु शरद्वर्णनं शक्तिसहकृतलोकावेक्षणजन्यव्युत्पत्तिकार्यमिति दर्शनीयतामर्हति । भारवेः शरद्वर्णनपराः कतिपये मनोहराः श्लोका अध उल्लिख्यन्ते यान् दृष्ट्वा सहृदया भारविकृतं शरद्वर्णनं निरन्वयमिति स्वयमेव निर्धारयितुं शक्नुवन्ति—

'विनम्रशालिप्रसवौघशालिनी—
रपेतपङ्का ससरोरुहाम्भसः ।
ननन्द पश्यन्नुपसीम स स्थली—
रुपायनीभूतशरद्गुणश्रियः ।'

निरीक्ष्यमाणा इव विस्मयाकुलैः
पयोभिरुन्मीलितपद्मलोचनैः ।
हृतप्रियादृष्टिविलासविभ्रमा
मनोऽस्य जह्रुः शफरीविवृत्तयः ॥

तुतोष पश्यन् कलमस्य सोऽधिकं
सवारिजे वारिणि रामणीयकम् ।
सुदुर्लभे नार्हति कोऽभिनन्दितुं
प्रकर्षलक्ष्मीमनुरूपसङ्गमे ॥

नुनोद तस्य स्थलपद्मिनीगतं
वितर्कमाविष्कृतफेनसन्तति ।
अवाप्तकिञ्जल्कविभेदमुच्चकै—
र्विवृत्तपाठीनपराहतं पयः ॥

कृतोर्मिरेखं शिथिलत्वमायता
शनैः शनैः शान्तरयेण वारिणा ।
निरीक्ष्य रेमे स समुद्रयोषितां
तरङ्गितक्षौमविपाण्डुसैकतम् ॥

मनोरमं प्रापितमन्तरं भ्रुवो—
रलङ्कृतं केसररेणुनाऽणुना ।
अलक्तताम्राधरपल्लवश्रिया
समानयन्तीमिव बन्धुजीवकम् ॥

नवातपालोहितमाहितं मुहु—
र्महानिवेशौ परितः पयोधरौ ।
चकासयन्तीमरविन्दजं रजः
परिश्रमाम्भः पुलकेन सर्पता ॥

कपोलसंश्लेषि विलोचनत्विषा
विभूषयन्तीमवतंसकोत्पलम् ।
सुतेन पाण्डोः कलमस्य गोपिकां
निरीक्ष्य मेने शरदः कृतार्थता ॥'

उपारताः पश्चिमरात्रिगोचरा—
दपारयन्तः पतितुं जवेन गाम् ।
तमुत्सुकाश्चक्रुरवेक्षणोत्सुकं
गवां गणाः प्रस्नुतपीवरौधसः ॥

परीतमुक्षावजये जयश्रिया
नदन्तमुच्चैः क्षतसिन्धुरोधसम् ।
ददर्श पुष्टिं दधतं स शारदीं
सविग्रहं दर्पमिवाधिपं गवाम् ॥

विमुच्यमानैरपि तस्य मन्थरं
गवां हिमानीविशदैः कदम्बकैः ।
शरन्नदीनां पुलिनैः कुतूहलं
गलद्दुकूलैर्जघनैरिवादधे ॥

गतान् पशूनां सहजन्मबन्धुतां
गृहाश्रयं प्रेम वनेषु बिभ्रतः ।
ददर्श गोपानुपधेनु पाण्डवः
कृतानुकारानिव गोभिरार्जवे ॥

परिभ्रमन्मूर्धजषट्पदाकुलैः
स्मितोदयादर्शितदन्तकेसरैः ।
मुखैश्चलत्कुण्डलरश्मिरञ्जितै-
र्नवातपामृष्टसरोजचारुभिः ॥

निबद्धनिःश्वासविकम्पिताधरा
लता इव प्रस्फुरितैकपल्लवाः ।
व्यपोढपार्श्वैरपवर्तितत्रिका
विकर्षणैः पाणिविहारहारिभिः ॥

व्रजाजिरेष्वम्बुदनादशङ्किनीः
शिखण्डिनामुन्मदयत्सु योषितः ।
मुहुः प्रणुन्नेषु मथां विवर्तनै-
र्नदत्सु कुम्भेषु मृदङ्गमन्थरम् ॥

स मन्थरावल्गितपीवरस्तनीः
परिश्रमक्लान्तविलोचनोत्पलाः ।
निरीक्षितुं नोपरराम वल्लवी-
रभिप्रनृत्ता इव वारयोषितः ॥[1]

सन्धिघटनादृशा प्रथमषट्कस्य चतुर्थ—पञ्चम—षष्ठसर्गेषु दृश्यादृश्यतया 'बीज-व्यक्तिः प्रतिमुखं भवेदि'ति लक्षणः प्रतिमुखसन्धिरनुसन्धातव्यः । तत्र चतुर्थसर्गे मुखसन्धेराभिख्येन वर्तमानस्याऽस्य सन्धेरङ्गं प्रसादनस्वरूपमुपन्यासाख्यमवगन्तव्यम् । किरातार्जुनीयरूपे महाकाव्यप्रबन्धेऽत्र सर्गे शरद्वर्णनप्रकरणं महाकाव्यस्योपशोभानिष्पत्त्यै निवेशितं भारविणा । शरद्वर्णनमहिम्ना यदत्रोप-

---

१. तदेव, ४.२-१७

शोभानिष्पादनं तत् प्रक्रान्तसंविधानकानुबन्धिकमनीयसम्पदो निधानमिव सम्पद्यमानं दृश्यते । शरद्वर्णनेऽत्र भुवि, व्योम्नि, अप्सु, वायौ, पावके च शरदः सरसतापादकः प्रभावो यद् वर्णितो भारविणा तद् वस्तुतः शरत्काल-स्वरूपस्वभावपरिस्पन्दस्य समुल्लासाय सम्पद्यते ।

अत्रैव सर्गे गुह्यकमुखाद् यच्छरच्छोभावर्णनं निम्नाङ्कितेषु श्लोकेषु दृश्यते तदर्जुनविजयाशंसने परिणममानं भारविकृतस्य शरद्वर्णनस्यैतत् प्रकरणसङ्गतं किमपि काव्यौचित्यं प्रकाशयति—

'इयं शिवाया नियतेरिवायतिः
कृतार्थयन्ती जगतः फलैः क्रिया ।
जयश्रियं पार्थ ! पृथूकरोतु ते
शरत् प्रसन्नाम्बुरनम्बुवारिदा ॥'

विहारभूमेरभिघोषमुत्सुकाः
शरीरजेभ्यश्च्युतयूथपंक्तयः ।
असक्तमूधांसि पयः क्षरन्त्यमू-
रुपायनानीव नयन्ति धेनवः ॥

'जगत्प्रसूतिर्जगदेकपावनी
व्रजोपकण्ठं तनयैरुपेयुषी ।
द्युतिं समग्रां समितिर्गवामसा-
वुपैति मन्त्रैरिव संहिताहुतिः ॥'[२]

अत्र 'इयं शिवाया' इत्यादिश्लोके प्रतिमुखसन्धेः पुष्पाख्यस्याऽङ्गस्य शोभा समुन्मिषति । 'विहारभूमे'रित्यादौ, 'जगत्प्रसूति' रित्यादौ च गोरूपमङ्गलवस्तु विषयवर्णना पार्थस्य विजययात्रायां प्रवृत्तस्य शुभाशंसायामेव परिणमति । एवं शरद्वर्णनेनाऽलक्ष्यरूपस्य बीजस्य व्यक्तिः स्पष्टमेव भारवेः कविकर्मकौशलं प्रख्यापयतीति ।

---

२. तदेव, ४.२१, ३१, ३२

पञ्चमः सर्गो बहुविधैर्विलसितस्य हिमवतो नगाधिराजस्य बहुविधैर्वृत्तैर्वर्णनार्थं प्रारब्धो भारविणा । विस्तृतेन हिमवद्वर्णनेन दुर्लक्ष्यस्य बीजस्य विशदा व्यक्तिर्निम्नाङ्कितेन श्लोकेन कुर्वाणो महाकविभारविः स्वस्य रसप्रबन्धनिबन्धननैपुण्यं निकामाविष्करोति—

'भाभूवन्नपथहृतस्तवेन्द्रियाश्वाः
सन्तापे दिशतु शिवः शिवां प्रसक्तिम् ।
रक्षन्तस्तपसि बलं च लोकपालाः
कल्याणीमधिकफलां क्रियां क्रियासुः ।'[1]

पार्थस्येन्द्रकीलपर्वतशिखरारोहणम्, इन्द्रकीलवनराजिभिस्तस्य कुसुमोत्करैरभिनन्दनम्, जाह्नवीसलिलशीतलैः समीरणैस्तस्य मार्गपरिश्रमापनोदनम्, अनुवप्रमपां निर्झरैः माङ्गलिकतूर्यनिध्वानैस्तस्य स्वागतव्याहरणम्, मनसः प्रसत्तिमिव वनान्तभुवमासाद्य तस्य तपश्चरणार्थं धृतिबन्धनम्, तत्तीव्रतपश्चरणभीतैर्गुह्यकगणैर्देवेन्द्राय तत्तपोवृत्तान्तविनिवेदनम्, देवेन्द्रेण च पार्थस्य तपोनियमस्थैर्यं परीक्षितुं तन्मनो विलोभनाय सुरसुन्दरीणां सम्प्रेषणम्—इति प्रकरणबाहुल्यं भारविणा वर्णनाविषयीकृतम् । प्रत्येकं च प्रकरणं परस्परमुपजीव्योपजीवकभावेन सुसंगतं विरचितं पौर्वापर्यपर्यवसितसुन्दरसंविधानबन्धुरं काञ्चन रमणीयां प्रकरणरचनावैचित्रीमुद्भावयितुं समुत्सुकमवलोक्यते ।

—०—

१. तदेव, ५.५०

किरातार्जुनीयमहाकाव्यस्य प्रथमषट्के यत् सर्गत्रिकं चतुर्थपञ्चमषष्ठात्मकं तत्र नायकस्याऽर्जुनस्य संसाध्ये पाशुपतास्त्रप्राप्तिरूपे फलयोगे प्रयत्नलक्षणाऽवस्था सम्यक् चित्रिता भारविणा। तत्र सर्गत्रिकमिदं धनञ्जयचरितस्य यदितिवृत्तं तस्य खण्डरूपमेव। धनञ्जयोऽर्जुनः खलु स्वायत्तसिद्धिर्नायकः। अतएव बीजबिन्दुकार्यरूपास्तिस्र एवार्थप्रकृतयः सम्पाद्येऽर्थे कर्तुर्नायकस्य प्रकृतयः स्वभावविशेषाः महाकाव्येऽत्र विनिबद्धाः। अत्र सर्गत्रिकं भारविणा कार्यारम्भस्य दृश्यादृश्यत्वयोर्दृश्यत्वम्—

'हृतप्रियादृष्टिविलासविभ्रमा
मनोऽस्य जह्रुः शफरीविवृत्तयः।'[1],

इति श्लोकार्धे सूक्ष्मं संकेतितम्। यतो ह्यनेनैव संकेतेन पार्थहृदये द्रौपदीस्मृतिस्तद्द्वारादुःशासननिकारस्मृतिस्तज्जन्या दुर्योधनकृतयुधिष्ठिरावमाननस्मृतिस्तत्संभूता च स्वकर्तव्यविनिश्चयाध्यवसायस्मृतिरिति स्मृतिपरम्पराः स्पष्टमभिव्यक्तिपथमानीयन्ते। एतैरेव स्मृतिसन्तानैरर्जुनस्य स्वसमीहितसिद्धये प्रयत्नविशेषः सहृदयानां पुरतः सूक्ष्मं समुपन्यस्तो भारविणा।

पञ्चमे सर्गे विच्छिन्नमिव प्रतिभासमानमर्जुनचरितेतिवृत्तसूत्रं विषयान्तरवर्णनप्रसङ्गे प्रकारान्तरेण संयोजितं भारविणा। तथा हि—

---

१ किरात०, ४.३

'इत्युक्त्वा सपदि हितं प्रियं प्रियार्हे
धाम स्वं गतवति राजराजभृत्ये ।
सोत्कण्ठं किमपि पृथासुतः प्रदध्यौ
संधत्ते भृशमरतिं हि सद्वियोगः ॥'[1],

इति श्लोके न केवलं राजराजभृत्यवियोगेन दुःखितमनस्कोऽर्जुनः किन्तु प्रियया द्रौपद्या प्रियैश्च भ्रातृभिर्वियोगतोऽपि भृशं दुःखाक्रान्त इति ध्वनिरनिवारितप्रसरं निस्सरति । अत्र 'किमपी'ति पदमहिम्ना धनञ्जयहृद्गतः प्रियवियोगः परामृष्टस्सन् भवतु नाम गुणीभूतः किन्तु ध्वनेरयं कश्चन सौन्दर्याधायकोऽलङ्कारो विशेषध्वनिमेव निकामं मनोरमीकरोति । इत्थं प्रतिमुखसन्धेः परिसर्पनामकमङ्गं भारविणाऽत्र योजितमिति प्रतीयते यतो हि नायकस्याऽर्जुनस्य सोत्कण्ठं प्रध्यानं मुखसन्धौ निक्षिप्तस्य बीजस्य नष्टप्रायस्यान्वेषणरूपमिति मन्तव्यमेव ।

एवमेव —

'तमनतिशयनीयं सर्वतः सारयोगा—
दविरहितमनेकेनाङ्कभाजा फलेन ।
अकृशमकृशलक्ष्मीश्चेतसाशंसितं स
स्वमिव पुरुषकारं शैलमभ्याससाद ।'[2],

इति श्लोकेऽपि चेतसासंशितस्य स्वपौरुषस्येवेन्द्रकीलपर्वतशिखरस्य यदर्जुनकृतमभ्यासादनवर्णनं तेनार्जुनमनसि विवर्तमानस्य शत्रुविजयाध्यवसायस्य प्रतीतिर्निर्विरामं सहृदयहृदयानि संस्पृशति । अर्जुनश्च नायकः स्वपुरुषकारमेव शत्रुविजयसाधनं मन्वानः तैस्तैर्विक्षेपैरनाकुलितहृदये देवेन्द्रप्रसादनाय शिवाराधनाय च स्वपौरुषमेवावलम्बमानो यद् वर्ण्यते तत्सर्वारतिप्रशमनात्मकस्य प्रतिमुखसन्धेश्शमाख्यस्याङ्गस्य योजनैव यतोऽर्जुनचरितरूपस्येतिवृत्तस्य विशृंखलता निरस्यते, अथ चाङ्गिनो रसस्य प्रवाहविहतिर्निराक्रियते ।

---

१ तदेव, ५.५१
२ तदेव, ५.५२

षष्ठेऽपि सर्गे—

'उरु सत्त्वमाह विपरिश्रमता
परमं वपुः प्रथयतीव जयम् ।
शमिनोऽपि तस्य नवसङ्गमने
विभुतानुषङ्गि भयमेति जनः ।[1],

इति श्लोके नायकस्याऽर्जुनस्य मुनिवत्तपश्चरणपरायणस्य शत्रुमर्दनाध्यवसाय-विनिश्चयः सूक्ष्ममभिव्यज्यमानः कथासूत्रं विसूत्रणात् संरक्षितुं समर्थ एवेति निपुणं निरूपणीयं किरातकाव्यप्रणयिभिः ।

सप्तमसर्गान्नवमसर्गपर्यन्तं किरातार्जुनीयमहाकाव्यस्य द्वितीयषट्के यत् सर्गत्रिकं तद् विषयान्तरवर्णनापरमितिवृत्तविच्छेदकमिवाऽऽभाति । तथा हि सप्तमे सर्गेऽर्जुनमनोव्यामोहजननाय देवेन्द्रादेशेन सुरसुन्दरीणां गजारूढानां स्यन्दनारूढानाञ्च व्योममार्गेण प्रस्थानमर्जुनतपश्चरणस्थले च निवेशनपरि-कल्पनादि वर्ण्यते । अष्टमसर्गे तासामेव सुराङ्गनानां मदनजैत्रास्त्रभूतानां वनविहार–पुष्पावचय–जाह्नवीजलक्रीडादि सौष्ठवौदार्यविशेषशालिभिः पदैर्निरूप्यते । नवमश्च सर्गः सूर्यास्तमनचन्द्रोदयन-प्रणयियुगलरतिविहरणादि-वर्णनापरः श्रृङ्गाररसोद्दीपनविभावमभिव्यनक्ति । अत्र सर्गत्रिके नायकार्जुन-चरितेतिवृत्तं प्रसुप्तकल्पमिव प्रतिभाति । किन्तु सर्वेषामेतेषां श्रृङ्गाराङ्ग-वर्णनानां प्रयोजनमग्रे वर्ण्यमानस्य स्थिरधियो जितेन्द्रियस्य कृतशत्रुविजय-विनिश्चयस्य नायकस्याऽर्जुनस्य देवेन्द्रप्रसादने शिवाराधने चैकतानमनस्कतायाः प्रत्यायनमिति भारवेर्महाकवेर्निगूढाभिप्रायो न विस्मर्तव्यः ।

किरातमहाकाव्यस्य द्वितीयषट्कस्य द्वितीयस्मिन् सर्गत्रिके दशमे सर्गे पार्थमुनिमनःप्रलोभनार्थं रम्यहावभावानां प्रत्यङ्गदीपितमण्डनश्रियां देवाङ्ग-नानां तास्ताः श्रृङ्गारचेष्टा वर्णनाविषयीकृता भारविणा । सर्वासां सुराङ्गना-चेष्टानां पार्थमनोविलोभने निकाममसाफल्यं सञ्जातमिति चरितनायकस्यो-दात्तत्वमाविष्कर्तुं भारविणा निम्नाङ्कितः श्लोकः सुविचिन्त्य रचितः--

---

१ तदेव, ६.३५

'नृपतिमुनिपरिग्रहेण सा भूः
सुरसचिवाप्सरसां जहार तेजः ।
उपहितपरमप्रभावधाम्नां
न हि जयिनां तपसामलङ्घ्यमस्ति ॥[1]'

निम्नाङ्कितोऽपि श्लोक उपर्युक्तमेवाभिप्रायं द्रढयति—

'यमनियमकृशीकृतस्थिराङ्गः
परिददृशे विधृतायुधः स ताभिः ।
अनुपमशमदीप्ततागरीयान्
कृतपदपंक्तिरथर्वणेव वेदः ॥[2]'

अत्रैव सर्गे वर्षावर्णनक्रमेण भारविणा सर्वेषामृतूनां यद् वर्णनं क्रियते तदपि पार्थमुनिमनोविमोहनार्थैवेत्येतद् ऋतुवर्णनं नानौचित्यावहमिति मन्तव्यं सुधीभिर्भारविकाव्यसहृदयैः। अस्मिन् प्रसङ्गेऽध उल्लिखितः श्लोकः स्मर्तव्यतामावहति—

'प्रभवति न तदा परो विजेतुं
भवति जितेन्द्रियता यदात्मरक्षा ।
अवजितभुवनस्तथा हि लेभे
सिततुरगे विजयं न पुष्पमासः ॥[3]'

अतएव सर्गान्ते भारविस्सर्वं नायकस्याऽर्जुनस्य तपोविघ्नं तत्तापस्तेजसा विनाशितमित्युपसंहरन्नाह—

'स्वयं संराध्यैवं शतमखमखण्डेन तपसा
परोच्छित्त्या लभ्यामभिलषति लक्ष्मीं हरिसुते !!
मनोभिः सोद्वेगैः प्रणयविहतिध्वस्तरुचयः
सगन्धर्वा धाम त्रिदशवनिताः स्वं प्रति ययुः ॥[4]'

---

१ तदेव, १०.६
२ तदेव, १०.१०
३ तदेव, १०.३५
४ तदेव, १०.६३

अत्रैव सर्गत्रिक एकादशः सर्गः पार्थमुनिं तपसो विनिवारयितुं देवेन्द्रस्य मधुराः न्याय्याश्च वाचोयुक्तीः प्रदर्शयितुमथ च पर्यन्ते धनञ्जयस्य सुनिश्चित-स्वाध्यवसायत्वं प्रकाशयितुं निर्मितो वीररसप्रबन्धभूतस्य किरातार्जुनीयस्य वीररसप्रवाहनिर्वाहे पूर्वरङ्गायमाणः प्रतिभाति । अधोलिखिते श्लोकयुग्मे दृश्यतामिन्द्रस्यार्ऽर्जुनं प्रति मोक्षप्राप्त्युपदेशः --

'जन्मिनोऽस्य स्थितिं विद्वां—
ल्लक्ष्मीमिव चलाचलाम् ।
भवान्मा स्म वधीन्न्याय्यं
न्यायाधारा हि साधवः ॥

विजहीहि रणोत्साहं
मा तपः साधु नीनशः ।
उच्छेदं जन्मनः कर्तु—
मेधि शान्तस्तपोधन ॥[१],

देवेन्द्रस्यादेशमिममुपदेशं वा स्वकार्येऽन्तरायं मन्वानस्यार्ऽर्जुनस्याऽपि दृढनिश्चयो निम्नलिखितेषु श्लोकेषु स्पष्टमुन्नेतुं शक्यः—

'उदाहरणमाशीःषु
प्रथमे ते मनस्विनाम् ।
शुष्केऽशनिरिवामर्षो
यैररातिषु पात्यते ॥,

'न सुखं प्रार्थये नार्थ—
मुदन्वद्वीचिचञ्चलम् ।
नानित्यताशनेस्त्रस्यन्
विविक्तं ब्रह्मणः पदम् ॥,

---

१ तदेव, ११. ३०, ३१

'विच्छिन्नाभ्रविलायं वा
विलीये नगमूर्धनि ।
आराध्य वा सहस्राक्ष—
—मयशः शल्यमुद्धरे ।'[1],

इत्थं सप्तमसर्गादारभ्यैकादशसर्गपर्यन्तं यद्वर्णनाविषयवस्तुजातं तत् किरातमहाकाव्यस्य रससर्गबन्धस्य कथावैचित्र्याधायकत्वादङ्गरूपेण निबद्धं सौन्दर्यायैव संपद्यत इति मान्यतामर्हति ।

स्वायत्तसिद्धेः पार्थस्यार्ऽर्जुनस्य नायकस्य चरितवर्णनायां पताकाप्रकर्योरनावश्यकत्वात् प्राप्त्याशानियताप्त्योरवस्थयोरप्यसद्भाव एव युक्तियुक्ततां भजते । अतएव गर्भसन्धेरवमर्शसन्धेश्च गवेषणा निरर्थिकैव । एवं सति किरातमहाकाव्यस्य तृतीयषट्कगतसर्गव्रात इव द्वादशः सर्गोऽपि फलागमावस्थासूचकः कार्यरूपार्थप्रकृतिनियोजनात्मकोऽवगन्तव्यः ।

शिवप्रसादनपरायणस्य पार्थस्य घोरं तपो भारविणा प्रसन्नगम्भीरपदैर्निम्नाङ्कितें श्लोकयुग्मे निपुणं व्यावर्णितम्—

'रजनीषु राजतनयस्य
बहुलसमयेऽपि धामभिः ।
भिन्नतिमिरनिकरं न जहे
शशिरश्मिसंगमयुजा नभःश्रिया ।।,

'तमुदीरितारुणजटांशु—
मधिगुणशरासनं जनाः ।
रुद्रमनुदितललाटदृशं
ददृशुर्मिमन्थिषुमिवासुरीः पुरीः ।'[2],

एवं मुनिवेशभृतो धनुर्भृतोऽर्जुनस्य दुःसहेन तपस्तेजसा समुद्विग्नमनसां तत्रत्यानां तपस्विनां शङ्करस्य भगवतः शरणवरणम्, तपस्विनां च तेषां स्तवसंतुष्टेन शिवेन तेभ्यः पार्थस्यादिपुरुषस्य नारायणस्यांशभूतनरत्वाख्यानं पार्थ-

१. तदेव, ११.६५, ६६, ७९
२. तदेव, १२. १२, १४

तंपसश्च भूभारलघूकरणरूपपरमार्थनिवेदनम्, पार्थतपः सुरकृत्यं मन्वानस्य मूकनामकस्य दानवस्य वराहवपुषः पार्थजिघांसया पराक्रमणम्, पार्थसंरक्षणाय च किरातरूपिणः शिवस्य सतपस्विभिः स्वगणसैनिकैर्मृगयाविहारव्याजेन वराहरूपिमूकदानववधाय ससन्नाहं सञ्चरणमिति बहुविधवर्ण्यं वस्तु यद् वर्णनाविषयीकृतं भारविणा तत् पर्यन्ते किरातार्जुनीयमहाकाव्यरूपरसप्रबन्धे सर्वथा सुसङ्गतमेव विभाति न विसंगतम् ।

काव्यनाट्यरूपेषु प्रबन्धेषु रसाभिव्यक्तिनिबन्धनत्वेन सन्धि-सन्ध्यङ्गघटनां विमृशतैव ध्वनिकारेणानन्दवर्धनेन ध्वन्यालोके सिद्धान्तितम्—

'सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया ।
न तु केवलया शास्त्रस्थितिसंपादनेच्छया ।,'[1]

अत एव भारवेर्महाकाव्ये नायकस्यार्ज्जुनस्य स्वायत्तसिद्धित्वात् सन्धित्रयमेव मुख-प्रतिमुख-निवर्हणरूपं सम्यग् घटितं मन्तव्यमिति । एवमेव सन्धीनामेतेषामङ्गान्यपि निकाममावश्यकान्येव संयोजितानि न सर्वाणीत्यपि शास्त्रानुमोदनात् समीचीनमेवेति ।

अधुना महाकाव्यस्यास्य तृतीयषट्कं त्रयोदशसर्गादारभ्याष्टादशसर्गपर्यन्तं वृत्त—चरित—रसवर्णनादृशा विमर्शनीयतामर्हति । तत्र त्रयोदशसर्गे स्फुटबद्धसटोन्नतेर् घनपोत्रविदीर्णशालमूलस्य निविडस्कन्धनिकायरुग्णवप्रस्य मायावराहस्य दर्शनेन विविधवितर्कमग्नमनसः पार्थस्य स्वपौरुषचिह्नमिव चापमालम्बमानस्य यद्वर्णनं तद् वीररसानुगुणं प्रतिभाति । अस्यैव प्रमाणरूपेण प्रच्छन्नवपुषो हरकिरातस्य वर्णनापरा निम्नलिखितश्लोके वचनरचना स्मर्तव्यतामावहति—

ददृशेऽथ सविस्मयं शिवेन
स्थिरपूर्णायतचापमण्डलस्थः ।
रचितस्तिसृणां पुरां विधातुं
वधमात्मेव भयानकः परेषाम् ।',[2]

१. ध्वन्यालोकः, ३.१२

२. किरात, १३.१७

अत्र निवर्हणसन्धेरङ्गस्यानुभूताख्यानरूपस्य निर्णयस्य योजना भारविणा सुविचिन्त्य कृतेति स्फुटं प्रतीयते।

नायकप्रतिनायकयोरर्जुनहरकिरातयोर्गाण्डीवे पिनाके च स्व-स्ववाणमधिरोहयतोर्यद् वर्णनं भारविणा क्रमशो निम्नाङ्कितयोः श्लोकयोः कृतं तद् द्वयोर्लोकातिशायि बलवीर्यमभिद्योतयति—

'प्रविकर्षनिनादभिन्नरन्ध्रः
पदविष्टम्भनिपीडितस्तदानीम्।
अधिरोहति गाण्डिवं महेषौ
सकलः संशयमारुरोह शैलः॥',

'विचकर्ष च संहितेषुरुच्चै—
श्चरणास्कन्दननामिताचलेन्द्रः।
धनुरायतभोगवासुकिज्या—
—वदनग्रन्थिविमुक्तवह्नि शंभुः॥'[१],

अत्र षोडशसंख्याके 'प्रविकर्ष'त्यादौ श्लोके योऽतिशयोक्तिरूपोऽलङ्कारः सोऽभिव्यक्तोऽपि गुणीभूतो वाच्यमुपस्कुर्वाणो विभाव्यते। अष्टादशसंख्याकश्च 'विचकर्षे'त्यादिः श्लोकः वर्ण्यस्वालक्षण्यादनपेक्षितव्यङ्ग्योऽपि भारवेर्वाच्यवाचकयोजनायां वैदग्धीं नव्यनिर्माणनिपुणताञ्च सुतरां प्रकाशयति।

सर्गस्याऽस्य निम्नोद्धृतः श्लोकः मायावराहजिघांसया हरकिरातेन कृतमोक्षस्य वाणस्य वर्णनापर एवंरूपः—

'अपयन् धनुषः शिवान्तिकस्थै—
र्विवरे सद्भिरभिख्यया जिहानः।
युगपद् ददृशे विशन् वराहं
तदुपोढैश्च नभश्चरैः पृषत्कः॥'[२]

अत्र योजितोऽतिशयोक्त्यलङ्कारो न स्वात्मनि विश्राम्यति किन्तु हरकिरातवाणस्य लोकोत्तरवेगरूपं वस्तु व्यनक्ति।

---

१. तदेव, १३.१६, १८

२. तदेव, १३.२३

निम्नाङ्कितोऽ'विभाविते'त्यादिः श्लोकः अर्जुनवाणस्य लोकातिशायिनं वेगं व्यंक्तुं विरचितो भारविणा—

'अविभावितनिष्क्रमप्रयाणः
शमितायाम इवातिरंहसा सः ।
सह पूर्वतरं नु चित्तवृत्ते—
रपतित्वा नु चकार लक्ष्यभेदम् ।।[१],

अत्र वेगगुणनिमित्ता दैर्घ्यगुणाभावोत्प्रेक्षा, चित्तवृत्त्या 'सहपातपूर्वपात-पतनाभावोत्प्रेक्षा, इति तिस्रोऽप्युत्प्रेक्षाः उत्तरोत्तरोत्कर्षेण वेगातिशयव्यञ्जनपरा इत्यलङ्कारेण ध्वन्यमानं वस्तु भारवेरेतत्प्रकरणवक्रतां वक्रोक्तिदृशा, प्रकरण-ध्वनिदृशा प्रकाशयतीति प्रस्पष्टमेव ।

अर्जुनहरकिरातयोर्विशिखाभ्यां मायावराहस्य समकालमेव प्राणघातं निश्चेष्टत्वं च वर्णयितुं भारविणा निम्नलिखितः श्लोक उत्प्रेक्षालंकारेणोपशो-भमान एवं विरचितः—

'अविवेकवृथाश्रमाविवार्थं
क्षयलोभाविव संश्रितानुरागम् ।
विजिगीषुमिवानयप्रमादा—
ववसादं विशिखौ विनिन्यतुस्तम् ।।[२],

उत्प्रेक्षेयं प्रकरणानुगुणा यतो हि तस्या निम्नाङ्किते श्लोकेऽनुगतिपू-र्विकेतिवृत्तविरचनोपकारकारिता स्पष्टमुत्प्रेक्षितुमर्हा ।

'स्फुटपौरुषमापपात पार्थ—
स्तमथ प्राज्यशरः शरं जिघृक्षुः ।
न तथा कृतवेदिनां करिष्यन्
प्रियतामेति यथा कृतावदानः ।।[३],

---

१. तदेव, १३.३७

२. तदेव, १३.२९

३. तदेव, १३.३२

एतत्प्रकरणयोजनायाः समनन्तरमेव हरकिरातवाहिनीपतेः कस्यचिद् वनेचरवेशधारिणः शिवगणस्यार्ऽर्जुनकृतं दर्शनम्, वनेचरेण चार्ऽर्जुनं प्रति हर-किरातशासननिवेदनम्, अर्जुनवनेचरयोश्च परस्परं शीलसम्पद्विभूषितो वार्तालाप इत्यादीतिवृत्तं वर्णनाविषयीभवितुं समुत्सुकीभवति । वनेचरसेनापतिः शिवगणः पार्थं सम्बोधयन् यदाह तत् सूक्तं महाकविना भारविणा निम्नाङ्कि-तयोः श्लोकयोः—

'ह्रेपयन्नहिमतेजसं त्विषा
सत्त्वमित्थमुपपन्नपौरुषः ।
हर्तुमर्हसि वराहभेदिनं
नैनमस्मदधिपस्य सायकम् ॥,
'अन्यदीयविशिखे न केवलं
निःस्पृहस्य भवितव्यमाहृते ।
निघ्नतः परनिर्बर्हितं मृगं
व्रीडितव्यमपि ते सचेतसः ।[1],

अत्र निर्वहणसन्धिसङ्केतेतिवृत्तविस्तरे मिथो जल्परूपस्य परिभाषेतिसमा-ख्यस्याङ्गस्य योजनाया उपक्रमः कृत इत्यवभाति । यतो ह्यग्रे पार्थशिवगणयोः प्रक्रान्तेतिवृत्तौपयिको मिथो जल्पस्वरूपः परिभाषणाख्याङ्गोपनिबन्धो दृश्यते येन चतुर्दशोऽपि सर्गः सम्यक्सम्बद्धः प्रतिभाति । अत्र सर्गे वनेचरस्य शिवगणस्य वचांसि भारविणा निम्नाङ्कितेषु श्लोकेषु स्फुटमधुरवचनरचनया प्रकाशीकृतानि-

'जेतुमेव भवता तपस्यते
नायुधानि दधते मुमुक्षवः ।
प्राप्स्यते च सकलं महीभृता
संगतेन तपसः फलं त्वया ॥,
तत्तदीयविशिखातिसर्जना-
दस्तु वां गुरु यदृच्छयागतम् ।
राघवप्लवगराजयोरिव
प्रेम युक्तमितरेतराश्रयम् ॥,

१. तदेव, १३.४१, ४६

'मार्गणैरथ तव प्रयोजनं
नाथसे किमु पतिं न भूभृतः ।
त्वद्विधं सुहृदमेत्य सोऽर्थिनं
किं नु यच्छति विजत्यमेदिनीम् ॥,

'अस्त्रवेदविदयं महीपतिः
पर्वतीय इति माऽवजीगणः ।
गोपितुं भुवमिमां मरुत्वता
शैलवासमनुनीय लम्भितः ॥[१],

अत्र वनेचरधनञ्जययोः मिथो यः संजल्पोऽयन्तं संक्षिप्य दृष्टान्तितः स तु वस्तुतस्सम्पूर्णप्रकरणरूपः किरातार्जुनीयमहाकाव्यप्रबन्धावयवरूपो वा सुतरां धनञ्जयसंबद्धमितिवृत्तं चरितं वा कयाचिद् भङ्ग्या प्रकाशयति समभिव्यनक्ति वेति किरातकाव्यरसिका एव प्रमाणम् ।

चतुर्दशे सर्गे वनेचरं शिवगणं प्रति धनञ्जयस्य यत् प्रतिवचनं यतो धनञ्जयस्य धीरोदात्तत्वरूपं कथानायकत्वं प्रस्पष्टं प्रकाशीभवति तन्निम्नाङ्किते श्लोकसन्दर्भे श्रोतव्यतामाधत्ते :—

'ततः किरातस्य वचोभिरुद्धतैः
पराहतः शैल इवार्णवाम्बुभिः ।
जहौ न धैर्यं कुपितोऽपि पाण्डवः
सुदुर्ग्रहान्तःकरणा हि साधवः ॥

सलेशमुल्लिङ्गितशात्रवेङ्गितः
कृती गिरां विस्तरतत्त्वसंग्रहे ।
अथ प्रमाणीकृतकालसाधनः
प्रशान्तसंरम्भ इवाददे वचः ॥

---

१. तदेव १३.५४, ५५, ५९, ६७

विविक्तवर्णाभरणा सुखश्रुतिः
प्रसादयन्ती हृदयान्यपि द्विषाम् ।
प्रवर्तते नाकृतपुण्यकर्मणां
प्रसन्नगम्भीरपदा सरस्वती ॥

भवन्ति ते सभ्यतमा विपश्चितां
मनोगतं वाचि निवेशयन्ति ।
नयन्त तेष्वप्युपपन्ननैपुणा
गभीरमर्थं कतिचित् प्रकाशताम् ॥

स्तुवन्ति गुर्वीमभिधेयसम्पदं
विशुद्धिमुक्तेरपरे विपश्चितः ।
इति स्थितायां प्रतिपूरुषं रुचौ
सुदुर्लभाः सर्वमनोरमा गिरः ॥[1],

अत्रैकयैव 'प्रवर्तते' इत्यारभ्य 'गिर' इत्यन्तया वाचोयुक्त्या महाकविर्भारविरर्जुनप्रशस्यां किरातगिरमिव किरातार्जुनीयरूपां स्वकविवाणीमपि सहृदयानां प्रीतये निरूपयन् प्रतिभाति । सहृदयाश्च भारविकाव्यरसिकाः किरातार्जुनीयमहाकाव्ये भारवेर्भारती 'प्रसन्नगम्भीरपदा सरस्वती' इत्येव भावयन्ति सम्भावयन्ति च तामिति नातितिरोहितम् ।

अर्जुनमनोगतस्य किरातवचसः प्रतिवचनस्य भारविणा स्ववाचि कृतं विनिवेशनं निम्नोद्धृते श्लोकसन्दर्भे विस्पष्टं विभाव्यते—

'यदात्थ कामं भवता स याच्यता—
मिति क्षमं नैतदनल्पचेतसाम् ।
कथं प्रसह्याहरणैषिणां प्रियाः
परावनत्या मलिनीकृताः श्रियः ॥

---

१. तदेव, १४.१-५

अभूतमासज्य विरुद्धमीहितं
बलादलभ्यं तव लिप्सते नृपः ।
विजानतोऽपि ह्यनयस्य रौद्रतां
भवत्यपाये परिमोहिनी मतिः ।।

असिः शरावर्म धनुश्च नोच्चकै—
र्विविच्य किं प्रार्थितमीश्वरेण ते ।
अथाऽस्ति शक्तिः कृतमेव याञ्चया
न दूषितः शक्तिमतां स्वयंग्रहः ।।

सखा स युक्तः कथितः कथं त्वया
यदृच्छयाऽसूयति यस्तपस्यते ।
गुणार्जनोच्छ्रायविरुद्धबुद्धयः
प्रकृत्यमित्रा हि सतामसाधवः ।।

वयं क्व वर्णाश्रमरक्षणोचिताः
क्व जातिहीना मृगजीवितच्छिदः ।
सहापकृष्टैर्महतां न सङ्गतं
भवन्ति गोमायुसखा न दन्तिनः ।।,

'मया मृगान् हन्तुरनेन हेतुना
विरुद्धमाक्षेपवचस्तितिक्षितम् ।
शरार्थमेष्यत्यथ लप्स्यते गतिं
शिरोमणिं दृष्टिविषाज्जिघृक्षता ।।'[1],

अत्र मिथो जल्परूपस्य परिभाषणात्मनो निर्वहणसन्ध्यङ्गस्य विनिवेशन-वैशिष्ट्यं भारवेः प्रतिभाप्रसूतस्यैतत्प्रकरणस्य किमपि सहृदयहृदयसंवेदनीयं वक्रतोल्लेखलावण्यमुल्लासयति । नाटकेष्विव काव्येष्वपि वस्तुतः एतादृशीं

---

१. तदेव, १४.२२,२५

प्रकरणवक्रतां परिलक्षयता युक्तियुक्तमभिहितं कुन्तकाचार्येण वक्रोक्तिजीविते कारिकाद्वय्याम्—

'मुखाभिसन्धिसन्ध्यादिसंविधानकबन्धुरम् ।
पूर्वोत्तरादिसङ्गत्या भङ्गानां विनिवेशनम् ॥

वक्रतोल्लेखलावण्यमुल्लासयति नूतनम् ॥'[1],

एतत्प्रकरणानन्तरं यत्प्रकरणं तत् किरातसैन्यानां धनञ्जयप्रधर्षणाय ससंरम्भं रणक्रियाप्रवर्तनरूपं धनञ्जयस्य च धैर्यमवष्टभ्य स्थितस्य गाण्डीव-सुहृदो महानुभावेन किरातसैन्यायां किङ्कर्तव्यविमूढतापादनरूपञ्चेति । प्रकर-णेऽत्र धनञ्जयस्य प्रच्छन्नवपुषा हरकिरातेन दृष्टस्य बलवीर्यप्रतापो निग्नाङ्कि-तेन विशेषकेण भारविणा यद्वर्णितस्तेन धनञ्जयगतो वीरो रसः सहृदयैस्तन्म-यीभावेन सचमत्कारं रस्यते—

'तपोबलेनैव विधाय भूयस—
स्तनूरदृश्याः स्विदिषून्निरस्यति ।
अमुष्य मायाविहतं निहन्ति नः
प्रतीपमागत्य किमु स्वमायुधम् ॥

ह्रता गुणैरस्य भयेन वा मुने—
स्तिरोहिताः स्वित् प्रहरन्ति देवताः ।
कथं न्वमी संततमस्य सायका
भवन्त्यनेके जलधेरिवोर्मयः ॥

जयेन कच्चिद् विरमेदयं रणाद्
भवेदथ स्वस्ति चराचराय वा ।
ततापं कीर्णा नृपसूनुमार्गणै—
रिति प्रतर्काकुलिता पताकिनी ॥'[2],

---

१. वक्रोक्तिजीवितम् ४.१४, १५
२, किरात० १४.६०.६२

अन्तिमे सर्गस्याऽस्य श्लोके निवर्हणसन्धेर्वाञ्छितप्राप्त्यभिप्रायमानन्दाख्यमङ्गं भारविणा सुनियोजितं दृश्यते—

'प्रविततशरजालच्छन्नविश्वान्तराले
विधुवति धनुराविर्मण्डलं पाण्डुसूनौ ।
कथमपि जयलक्ष्मीर्भीतभीता विहातुं
विषमनयनसेनापक्षपातं विषेहे ।।[1]'

यया श्लोकवाक्यविरचनया निवर्हणसन्धेरयमङ्गबन्धः कृतस्तया कश्चिदौचित्यसुन्दरो योऽर्थोऽवभासते स एवंरूपो यज्जयलक्ष्मीर्धनञ्जयबलवीर्यभयात् तथा भयाकुला यथा त्रिनयनात् महादेवात्संभाव्यमानागमं भयमप्यविगणय्य धनञ्जयस्य शरणं वृण्वाना सुस्थिता सञ्जातेति । अत्र यद् वाक्यौचित्यमाचार्यक्षेमेन्द्रेण परिभाषितं तत् सुतरां शोभमानमाभाति—

'औचित्यरचितं वाक्यं सततं सम्मतं सताम् ।
त्यागोदग्रमिवैश्वर्यं शीलोज्ज्वलमिव श्रुतम् ।।[2]'

अनेन च वाक्यौचित्येन युद्धोत्साहस्वरूपानुरूपो वाक्यार्थः सजीव इवावभासते ।

किरातकाव्यस्य पञ्चदशः सर्गः सर्गान्तरेभ्यो विलक्षण एव प्रतिभाति । अत्र वैलक्षण्यस्य कारणं भारवेः चित्रालङ्कारचमत्कारप्रदर्शनं बहुविधचित्रबन्धविरचन-कौशलप्रख्यापनञ्चेति । कुतस्तरां रसभावसमाहितो महाकविर्भारविः स्वस्य चित्रालङ्काररचनानैपुण्यं प्रकाशयितुकाम इत्यत्र कैश्चित्कारणैर्भाव्यम् । तत्र—

१) प्रथमं भारवेर्युगे प्रवर्तितासु राजाश्रितासु काव्यगोष्ठीषु केचन कवयः शब्दालङ्कारकविसंज्ञाभाजः चित्रालङ्कारबन्ध एव व्यापृताः श्रोतृजनान् प्रीणयन्तिस्म । एतेषां कविजनानां कृते सामान्यतः शब्दालङ्काररचनाचातुर्यं विशेषतश्च चित्रालङ्कारविरचनवैदग्ध्यमेव कवित्वमासीत् । एवमेवैतादृशकाव्यगोष्ठीसामाजिकानां कृते शब्दचित्रचमत्कृतत्वमेव काव्यप्रणयित्वमभूत् । यस्य कवयितुश्चित्रालङ्कारनिर्माणनैपुण्यं नाभूत् स कीदृशोऽयं कविरित्युपेक्षापात्रमेव

१. तदेव १४, ६५
२. औचित्यविचारचर्चा—१२

मन्यतेस्म । कविकर्मण एतादृश्यामवस्थायां चित्रकाव्यप्रणयिनोऽपि मूकीकर्तुं भारविणा तत्तच्चित्रबन्धविनिबन्धनवैशारद्यप्रदर्शनं कृतमिति सम्भाव्यते ।

२) द्वितीयं पञ्चदशसर्गगतवर्ण्यविषयसंबन्धिवैचित्र्यम् । अत्र सर्गे शब्दानां परस्परं यच्चित्रमायोधनं तत् हरकिरातसैन्यैस्सहार्जुनस्य चित्रायोधनेन सह साम्यं बिभृयादिति भारवेस्तत्तद्बहुविधचित्रबन्धोपनिबन्धे कौशलप्रदर्शन-मिति ।

३) तृतीयं तु स्वसमकालीनसर्वविधकविपरम्पराप्रवाहनिरोधाद् स्वात्म-संयमनमिति । यदपि कारणं भवतु भारवेश्चित्रबन्धा एतत्सर्गवर्ण्यवस्त्वनुगुणाः प्रतीयन्ते । नात्र रसभाववर्णना काचिद् धनञ्जयहरकिरातसैन्ययोरायोधन-वर्णने । किन्तु किरातार्जुनीयप्रबन्धव्यापिनि रसे नीरसोऽप्ययं प्रसङ्गो न वैरस्यं बिभर्ति पर्यन्ते वीररसप्रवाहपातित्वादिति ।

महाकविना माघेनापि भारविस्पर्द्धया शिशुपालवधमहाकाव्यस्यैकोनविंशे सर्गे श्रीकृष्णशिशुपालयोर्युद्धं वर्णयितुकामेनाऽनेकप्रकारकाश्चित्रबन्धा विरचिताः । चित्रबन्धदृष्ट्या विचित्राश्च ते क्वचिदेकाक्षराः क्वचिद्व्यक्षराः क्वचित् सर्वतो-भद्राः क्वचित् प्रतिलोमानुलोमपादप्रभृतयो विकटा विषमाश्च बन्धाः । चित्रबन्धे माघो भारविमेतिशयानः प्रतीयते । किन्तु यत् किञ्चिदप्यौचित्यं भारविनिबद्धे चित्रबन्धे सम्भावयितुं शक्यते तन्माघस्य चित्रबन्धे नैव दृश्यते । माघेन स्वमुखत एव स्वकृतचित्रबन्धस्य किमप्यौचित्यं प्रतिपादितं निम्नाङ्किते श्लोके—

'विषमं सर्वतोभद्रचक्रगोमूत्रिकादिभिः ।
श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद् बलम् ॥[1]'

अत्र स्वयमेव स्वरचितचित्रबन्धेन समं चैद्यस्य शिशुपालस्य बलविन्यासरूपं व्यूहबन्धमुपमिन्वानो माघः स्वस्याऽविमृश्य कारित्वं प्रकाशयन् प्रतिभाति । यतो हि कोलाचलमल्लिनाथादिभिर्माघकाव्यव्याख्यातृभिर्माघस्य शब्दचित्रव्यूहे यथा प्रवेशः कृतस्तथैव श्रीकृष्णोऽपि चैद्यव्यूहबन्धे विषमेऽपि प्रविष्टवानिति सर्वथा-ऽनौचित्यावहमिदमुपमानोपमेयभावकल्पनं न विदग्धसहृदयमनस्तोषावहमिति निश्चप्रचम् । अयमेव महाकाव्यनिबद्धश्चक्रादिचित्रबन्धोऽस्यैव सर्गस्य निम्न-निर्दिष्टे श्लोके निरायासं प्रवेशार्होऽपि प्रतिपादितः—

---

१ शिशुपालवधम् १९.४१

'विस्तीर्णमायामवती लोललोकनिरन्तरा ।
नरेन्द्रमार्ग रथ्येव पपात द्विषतां बलम् ॥[१],

यथा महानगरेषु द्राधीयसीनामपि रथ्यानां राजमार्गे प्रवेशो न दुःसंपादस्तथा चैद्यबलेषु यदुवाहिनीनामपि प्रवेशो निरायासमेव संपन्न इत्येवाभिप्रायोऽत्र । किन्त्वमुमभिप्रायं समनुसरद्भिः 'विषम'मित्यादौ श्लोके यो दुष्प्रवेशाभिप्रायस्स विखण्डित इव लक्ष्यते । अथ च यदुवाहिनीनां रथ्यामिरौपम्यं न तासां समरसन्नाहादिकं बलवीर्यं वा कथञ्चनाऽपि प्रकाशयितुमलमिति दोषान्तरमप्यापतत् प्रतीयते । विषयोऽयं काव्यकोविदसहृदयानां कृते विचारार्ह इति विरम्यते विस्तरतः ।

एतादृशः परस्परविरुद्धाभिप्रायप्रकाशको नैकोऽपि श्लोकः किरातमहाकाव्यस्य सर्गेऽत्रश्रुतिगोचरीभवति । चित्रबन्धमध्य एव यत्र निवर्हणसन्धेरद्भुतप्राप्त्यभिप्रायकमुपगूहनाख्यमङ्गं पूर्वोत्तरकथावस्तु संश्लेषाय भारविणा योजितं तत्र न शब्दचित्रताऽपितु शब्दसुष्ठुता द्रष्टुमर्हा । सर्गस्याऽस्य निम्नाङ्कितेषु श्लोकेषु दृश्यतामेतत्संविधानकमिव किञ्चित्—

'स्फुरत्पिशङ्गमौञ्जीकं धुनानस्स बृहद्धनुः ।
धृतोल्कानलयोगेन तुल्यमंशुमता बभौ ॥

पार्थबाणाः पशुपतेरावव्रुर्विशिखावलीम् ।
पयोमुच इवारन्ध्राः सावित्रीमंशुसंहतिम् ॥

शरवृष्टिं विधूयोर्वीमुदस्तां सव्यसाचिना ।
रुरोध मार्गणैर्मार्गं तपनस्य त्रिलोचनः ॥,

'विफलीकृतयत्नस्य क्षतबाणस्य शंभुना ।
गाण्डीवधन्वनः खेभ्यो निश्चक्राम हुताशनः ॥

स पिशङ्गजटावलिः किरन्नुरुतेजः परमेण मन्युना ।
ज्वलितौषधिजातवेदसा हिमशैलेन समं विदिद्युते ॥[२],

१ तदेव १९.४३
२ किरात १५.३९-४१, ४६, ४७

किरातार्जुनीयमहाकाव्यस्य षोडशे सर्गे प्रथमश्लोकादारभ्य सप्तदशश्लोकपर्यन्तं यद्युद्धवर्णनं तत् काञ्चित् विचित्रतां बिभर्ति। महाकाव्येषु वीररसात्मकेषु युद्धस्य वर्णनं प्राचीनमहाकविपरम्परायातमिति विचारयता भारविणा अश्वरथनागपदातिप्रभृतीनां युद्धसन्नाहानां धनञ्जयहरकिरातयोरायोधनेऽप्रयुक्तानामपि कयाचन भङ्ग्या यद्वर्णनं कृतं ततः महाकवेरेतद् विषयकवर्णनकौशलं प्रकाशितं भवति। हरकिरातस्य मायया धनञ्जयस्य मनसि किरातवाहिनीनां समरसंनहनादिविषयकवितर्कप्रादुर्भावं प्रदर्शयितुमेतद्युद्धवर्णनं समञ्जसमेव नाऽसमञ्जसमिति निश्चितम्। युद्धवर्णनस्यास्यैक एव श्लोकः दृष्टान्तरूपेणाध उद्ध्रियते—

'उज्झत्सु संहार इवास्तसंख्य—
—मह्नाय तेजस्विषु जीवितानि।
लोकत्रयास्वादनलोलजिह्वं
न व्याददात्याननमत्र मृत्युः।'[1]

यद्यपि श्लोकोऽयं रौद्ररसवर्णनापरस्तथापि महाकाव्यस्थायिना युद्धवीरेण रसेनाङ्गभावं प्राप्तस्तदुत्कर्षाधायकः प्रकामं परिपोषकश्च संवृत्तः सामञ्जस्यमेव स्वकीयं प्रत्याययति।

यथा भारविणा पूर्वोत्तरेतिवृत्तसन्दर्भयोः परस्परं साङ्गत्यं स्थापयितुं युद्धवर्णनायोजना कृता तथैव धनञ्जयस्य शिवप्रसादनाय तप्योनिष्ठस्य किरातरूपधारिणा शिवेन योद्धुं प्रवृत्तस्य धीरोदात्तनायकत्वमपि सर्गस्याऽस्यैव निम्नोल्लिखिते श्लोके निपुणं समुन्मीलितम्—

'वीतप्रभावतनुरप्यतनुप्रभावः
प्रत्याचकांक्ष जयिनीं भुजवीर्यलक्ष्मीम्।
अस्त्रेषु भूतपतिनापहृतेषु जिष्णु—
र्वर्षिष्यता दिनकृतेषु जलेषु लोकः॥'[2]

उपर्युद्धते श्लोके धीरोदात्तनायकचरितस्य धनञ्जयस्य सात्त्विकगुणेषु शोभाख्यस्य गुणस्य दशरूपकपरिभाषितस्य शोभा सुतरां विद्योतते—

---

१ तदेव १६.१६
२ तदेव १६.६४

'नीचे घृणाऽधिके स्पर्धा शोभायां शौर्यदक्षते ।'[1]

एवमेव स्थैर्याख्यं गुणान्तरमपि दशरूपककृता लक्षितं भारविणोपर्युक्तेनैव श्लोकेन धनञ्जयचरितवर्णनायां सम्यगभिव्यञ्जितम्—

'व्यवसायादचलनं स्थैर्यं विघ्नकुलादपि ।'[2]

अत्र सर्गे धनञ्जयहरकिरातयोरायोधनवर्णनमनुसरता माघमहाकविना श्रीकृष्णशिशुपालयोरायोधनं शिशुपालवधमहाकाव्यस्य विंशे सर्गे विशदं व्यावर्णितम् । यावद्विधानि विचित्राणि युद्धायुधानि भारविकाव्ये वर्णितानि तावद्विधानि ततोऽप्यधिकानि माघकाव्ये विशदं व्यावर्णितानि । तत्र श्रीकृष्णसैन्येषु शिशुपालप्रयुक्तस्य प्रस्वापनाख्यस्याऽस्त्रस्य वर्णनं निम्ननिर्दिष्टे श्लोके द्रष्टव्यम्—

'सलिलार्द्रवराहदेहनीलो
विदधद्भास्करमर्थशून्यसंज्ञम् ।
प्रचलायितलोचनारविन्दं
विदधे तद्बलमन्धमन्धकारः ॥'[3]

माघमहाकवेः प्रस्वापनाऽस्त्रप्रभावस्यैवंविधं वर्णनं भारविणा किरातकाव्यस्य षोडशे सर्गे २६ तमे श्लोकेऽर्जुनप्रयुक्तस्य प्रस्वापनाऽस्त्रस्य वर्णनमनुहरति । भारवेरर्थस्य हरणं प्रसङ्गान्तरे न दोषावहं किन्तु भारवेरेतद्विषयकं वर्णनं यथा स्वभावसुन्दरं प्रतिभाति न तथा माघमहाकविकृतमुपर्युक्तं वर्णनम्—

'प्रसक्तदावानलधूमधूम्रा
निरुन्धती धाम सहस्ररश्मेः ।
महावनानीव महातमिस्रा
छाया ततानेशबलानि काली ॥'[4]

---

१ दशरूपकम् २,१०, ११

२ तदेव २.१३

३ शिशुपालवधम् २०.३३

४ किरात, १६.२६

माघप्रयुक्तं 'प्रचलायितलोचनारविन्द'मिति पदकदम्बकं श्रीकृष्णसैनिकलोचनवर्णनप्रसङ्गे किञ्चिदप्रासङ्गिकमपि प्रतिभाति । भारविणाऽत्र 'प्रसक्तदावानलधूमधूम्रा काली छाया' या वर्णिता सा माघकृतां सलिलार्द्रवराहदेहलीलस्याऽन्धकारस्य वर्णनां नितरामतिशेत इत्यत्र सहृदया एव काव्यकोविदाः प्रमाणम् ।

किरातमहाकाव्यस्य सप्तदशः सर्गो धनञ्जयहरकिरातयोर्युद्धवर्णनाय विरचितो भारविणा । सर्गस्याऽस्याऽऽरम्भिक एव श्लोके एतद्वर्णनस्य विचित्रो भूमिकाबन्धो दृग्गोचरीभवति—

अथापदामुद्धरणक्षमेषु
मित्रेष्विवाऽस्त्रेषु तिरोहितेषु ।
धृतिं गुरुश्रीर्गुरुणाभिपुष्यन्
स्वपौरुषेणेव शरासनेन ॥[१],

किरातपृतनापतिरेव शिव इत्यजानानस्य धनञ्जयस्यालोकसामान्यं पौरुषं प्रकाशीकर्तुं भारविणा यदेवमुपक्रान्तं तेन प्रकरणस्याऽस्य सौन्दर्यमुपोद्बलितमिव दृश्यते । महाभारतस्थवनपर्वणि यत् कैरातपर्वाख्यमनुपर्व ततः प्रसङ्गमिमं गृह्णताऽपि भारविणा प्रकामं नवमिव सर्वं वर्ण्यं वर्ण्यते । दृश्यतां भारवेरयं श्लोकः—

'उमापतिं पाण्डुसुतप्रणुन्नाः
शिलीमुखा न व्यथयाम्बभूवुः ।
अभ्युत्थितस्याद्रिपतेर्नितम्ब—
मर्कस्य पादा इव हैमनस्य ॥[२],

श्लोकोऽयं महाभारतवनपर्वान्तर्गतं कैरातपर्वणः निम्नाङ्कितानां श्लोकानां तात्पर्यं संक्षिपन्नपि नवनिर्माण एव प्रतिभाति—

'ततोऽर्जुनः शरवर्षं किराते समवासृजत् ।
तत् प्रसन्नेन मनसा प्रतिजग्राह शङ्करः ॥,

---

१ तदेव १७.१
२ तदेव, १७.१२

मुहुर्तं शरवर्षं तत् प्रतिगृह्य पिनाकधृक् ।
अक्षतेन शरीरेण तस्थौ गिरिरिवाचलः ॥

स दृष्ट्वा बाणवर्षं तु मोघीभूतं धनञ्जयः ।
परमं विस्मयं चक्रे साधु साध्विति चाऽब्रवीत् ॥

अहोऽयं सुकुमाराङ्गो हिमवच्छिखराश्रयः ।
गाण्डीवमुक्तान् नाराचान् प्रतिगृह्णात्यविह्वलः ॥

कोऽयं देवो भवेत्साक्षाद् रुद्रो यक्षः सुरोऽसुरः ।
विद्यते हि गिरिश्रेष्ठे त्रिदशानां समागमः ॥

न हि मद्बाणजालानामुत्सृष्टानां सहस्रशः ।
शक्तोऽन्यः सहितुं वेगमृते देवं पिनाकिनम् ॥[1],

अत्र 'अक्षतेन शरीरेण तस्थौ गिरिरिवाचलः' इति पद्यार्धेन काव्यविच्छित्तिविचित्रिते सिद्धरसे महाभारते पिनाकिनो यद्वर्णनं तद्भारवेः स्मृतिकोषे सुरक्षितं तस्य कविप्रतिभां प्रद्योतयति तथा च प्रद्योतितया 'उपापतिं'—मित्यादि पद्यं[2] निकामं नव्यमेव निरर्गलं निस्सरद् विभाव्यते महाभारते धनञ्जयमनसि पिनाकिनमुद्दिश्य वितर्कः संशयो वा समभ्युदितो वर्णितः, किन्तु रसभावविवक्षया साध्यरसे किरातमहाकाव्ये वितर्कसंशययोः सर्वथाऽभाव एव दृश्यते ; अतएव भारवेरन्ये श्लोका एतत्प्रकरणसौन्दर्यविवर्धिनोऽग्रे निरायासं निःसरन्ति । तथा हि निम्नलिखितं श्लोकद्वयं दृश्यतां यत्तात्पर्यं महाभारतश्लोकेष्वन्वेष्टुमपि न शक्यते—

'सम्प्रीयमाणोऽनुबभूव तीव्रं
पराक्रमं तस्य पतिर्गणानाम् ।
विषाणभेदं हिमवानसह्यं
वप्रानतस्येव सुरद्विपस्य ॥

---

१ महा० वन० कैरात० ३९.३६-४१
२ किरात०, १३.१२

तस्मै हि भारोद्धरणे समर्थं
प्रदास्यता बाहुमिव प्रतापम् ।
चिरं विषेहेऽभिभवस्तदानीं
स कारणानामपि कारणेन ॥[1]

एवमेवाधोनिर्दिष्टा श्लोकत्रयी भारवेर्नवनिर्माणरूपा प्रतिभाति यतो ह्यस्या अभिप्राया महाभारतस्य कैरातपर्वणि क्वापि न दृश्यन्ते—

'अनामृशन्तः क्वचिदेव मर्म
प्रियैषिणाऽनुप्रहिताः शिवेन ।
सुहृत्प्रयुक्ता इव नर्मवादाः
शरा मुनेः प्रीतिकरा बभूवुः ॥

अस्त्रैस्समानामतिरेकिणीं वा
पश्यन्निषूणामपि तस्य शक्तिम् ।
विषादवक्तव्यबलः प्रमाथी
स्वमाललम्बे बलमिन्दुमौलिः ॥

'ततस्तपोवीर्यसमुद्धतस्य
पारं यियासोः समरार्णवस्य ।
महेषुजालान्यखिलानि जिष्णो—
रर्कः पयांसीव समाचचाम ।[2],

इत्थं भारवेरिदं कविकर्म धनञ्जयचरितं समुज्ज्वलीकरोति । शिव एव साक्षात् प्रतियोद्धेति वितर्कोऽपि धनञ्जयस्य मनसि नाङ्कुरितः । महाभारतेऽयं वितर्कः स्पष्टं प्रतिभासते । महाभारतं तु सिद्धरसं महामहाकाव्यम् । किराता-र्जुनीयमहाकाव्यं साध्यरसम् । सिद्धरसे महाभारतेऽभिव्यक्तेऽङ्गभूते वीररसे तन्मयीभावं भजमानो भारविः किरातमहाकाव्ये वीरं रसमङ्गिरूपेणाऽभिव्य-

---

१ तदेव, १७.१३, १४
२ तदेव, १७.३३-३५

ञ्जिजयिपुर्यदत्र सप्तदशेसर्गे कथावस्तुवैचित्र्यान्तरमिव चरितवैचित्र्यान्तरमपि समुल्लासयति ततस्सर्गस्याऽस्य पूर्वोत्तरैस्सर्गश्लोकैरसम्पाद्या काऽपि वैचित्री सहृदयहृदये परिस्फुरति यया भारवेः कारयित्री प्रतिभा सहृदयानां भावयित्रीं प्रतिभां प्रोत्साहयन्तीव प्रतिभाति ।

अन्तिमस्याऽष्टादशसर्गस्य बन्धवैचित्र्यविचारः प्राप्तावसर इति तत्र प्रयत्यते । 'तत उदग्र इव द्विरदे मुनौ'[1] इत्यादितः 'वियति वेगपरिप्लुतमन्तरा'[2] इत्यन्तं यद् द्रुतविलम्बितवृत्तबद्धं प्रसन्नगम्भीरपदं श्लोकद्वादशकं तद् धनञ्जय-हरकिरातयोः परस्परं विस्मयावहं मुष्टियुद्धं वर्णयितुं विरचितं महाकविना भार-विणा । तत्र निम्नाङ्कितो दशमः श्लोको भारवेः कालिदासप्रणयितां प्रस्पष्टं प्रत्याययति—

'प्रचलिते चलितं स्थितमास्थिते
विनमिते नतमुन्नतमुन्नतौ ।
वृषकपिध्वजयोरसहिष्णुना
मुहुरभावभयादिव भूभृता ॥'[3],

अत्र श्लोके महाकवेः कालिदासस्य निम्ननिर्दिष्टेन श्लोकेन कश्चन कमनीयः पदसादृश्यापरनामधेयः पदसंवादो निरायासं द्रष्टुं शक्यः—

'स्थितः स्थितामुच्चलितः प्रयातां
निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां
छायेव तां भूपतिरन्वगच्छत् ॥,'[4]

किन्तु नात्र कश्चन शब्दहरणदोषो न वा कश्चनार्थहरणदोषः समापतति । कालि-दासस्य वर्ण्यमन्यत्, भारवेश्च वर्ण्यमन्यत् । स्थितः स्थितामुच्चलितः प्रयतामिति प्रसन्नपदसन्दर्भस्य स्मृतिः भारवेर्हृदयादुल्लसन्तीव विभाव्यते । तयैव हृतहृदयो

---

१. तदेव, १८.१
२. तदेव, १८.१२
३. तदेव, १८.१०
४. रघुवंशम् २.६

भारविः पार्थहरकिरातोर्मुष्टियुद्धं कालिदासस्यैव कतिपयानि पदानि प्रसङ्गानुसारं विपरिणमय्य वर्णयति । आस्तामयं विषयान्तरविस्तरः ।

संस्कृतकाव्यसाहित्ये भारविवर्णितं युद्धमिवान्यकविवर्णितं युद्धमदृष्टचरम् । एतर्हि युद्धे नायकस्य धनञ्जयस्य वीर्यविदानं प्रतिनायकेन हरकिरातेन श्लाघ्यमानं निम्नाङ्कितेषु श्लोकेषु वर्णितं स्मर्तव्यतामावहति—

'वियति वेगपरिप्लुतमन्तरा
समभिसृत्य रयेण कपिध्वजः ।
चरणयोश्चरणानमितक्षिति—
र्निजगृहे तिसृणां जयिनं पुराम् ।।

विस्मितः सपदि तेन कर्मणा
कर्मणां क्षयकरः परः पुमान् ।
क्षेप्तुकाममवनौ तमक्लमं
निष्पिपेष परिरभ्य वक्षसा ।।

तपसा तथा न मुदमस्य ययौ
भगवान् यथा विपुलसत्त्वतया ।
गुणसंहतेः समतिरिक्तमहो
निजमेव सत्त्वमुपकारि सताम् ।।'[1],

नात्र विकटाक्षरपदबन्धाडम्बरः । न वा वक्रपदरचना-विच्छित्तिः । अत्र प्रसङ्गान्तरे भारविणैव निम्नोद्धृते श्लोके या स्वीया विषयवर्णनाशैली कयाचन व्यपेक्षया निरूपिता तस्या एव सम्यग् विजृम्भणं दृश्यते—

'स्फुटता न पदैरपाकृता
न च न स्वीकृतमर्थगौरवम् ।
रचिता पृथगर्थता गिरां
न च सामर्थ्यमपोहितं क्वचित् ।।'[2],

---

१. किरात, १८.१२-१४

२. तदेव, २.२७

अत्र महाभारतवनपर्वान्तर्गतकैरातपर्वणो यत्कथाशरीरं महाकविना भारविणा समीक्ष्योपसंगृहीतं तत्र च यत्स्वकीयया कल्पनया किञ्चिन्नवीनं वस्तु समुत्पादितं यदपेक्षया समुचितविभावादियोजना च कृता ततः प्रकरणमिदं किरातार्जुनीयमहाकाव्यस्याऽवयवभूतं रसमयं प्रतिभासते। अर्थान्तरन्यासरूपोऽलङ्कारोऽपि नाऽत्र स्वात्मनि विश्रान्तः किन्तु प्रकरणव्यङ्ग्य एव वस्तुनि स्वशोभां समर्प्याऽवस्थितो विभाव्यते। कालिदास-भारविसदृशानां महाकवीनां रसप्रबन्धविरचनवैदग्धीं निपुणं विमृशतैव ध्वनिकारेणानन्दवर्धनेन निम्नाङ्किता कारिका रचितेत्यनुमीयते—

'अलङ्कृतीनां शक्तावप्यानुरूप्येण योजनम्।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम्॥'[1], इति।

एतत्प्रकरणानन्तरं निम्नाङ्कितानि यान्युपप्रकरणानि सर्गेऽत्र समाविष्टानि तानीमानि—

(क) प्रथममुपप्रकरणं विस्मयविस्फारितेन दृशा धनञ्जयकृतं हरकिरातस्य शिवस्वरूपदर्शनम्।

(ख) द्वितीयमुपप्रकरणं धनञ्जयस्य तपःसाफल्येन हृष्टान्तरात्मना देवेन्द्रेण देवगणैस्समं स्वहृद्गतानन्दप्रकाशनम्।

(ग) तृतीयमुपप्रकरणं धनञ्जयस्य शिवस्तवनम्, शिवशरणवरणम्, महाकविकालिदासानुवृत्त्या च शिवस्याष्टमूर्तिषु कासाञ्चित् भक्तिभावातिरेकेण परामर्शनञ्चेत्यनुप्रकरणत्रिकमयम्।

(घ) चतुर्थमुपप्रकरणं धनञ्जयकृतं वरयाचनम्, शिवकृतञ्च वरप्रदानमिति।

एतदुपप्रकरणचतुष्टये प्रथमोपप्रकरणे युद्धवीररसविभावादिवर्णनानन्तरं तदविरोधिनोऽद्भुतस्य रसस्य धनञ्जयालम्बनस्य यः समावेशलेशस्स निम्नाङ्किते श्लोकद्वये मनोरमः प्रतीयते—

'अथ हिमशुचिभस्मभूषितं
शिरसि विराजितमिन्दुलेखया।
स्ववपुरतिमनोहरं हरं
दधतमुदीक्ष्य ननाम पाण्डवः॥

---

१, ध्वन्या०, ३.१४

सहशरधि निजं तथा कार्मुकं
वपुरतनु तथैव संवर्मितम् ।
निहितमपि तथैव पश्यन्नसिं
वृषभगतिरुपाययौ विस्मयम् ॥[१],

अत्र 'विस्मयमुपाययया'विति स्वशब्दनिवेदितत्वेन नाद्भुतरसस्य रस्यता किन्तु हरकिरातस्य स्वस्य च सद्यः स्वरूपपरिवर्तनादिपरामर्शनरूपोद्दीपनविभावतदनुरूपानुभावसंयोजनमहिम्नेति निध्येयं सुधीभिरिति । वीराद्भुतयोरङ्गाङ्गिभावो न दुःसंपाद्यो यतो हि तौ रसौ मिथोऽविरोधिनौ परस्परमुपस्कुरुतः ।

द्वितीयोपप्रकरणे धनञ्जयस्य शिवाराधनतपःसाफल्येन परितुष्टस्य देवेन्द्रस्य देवसंधैस्समं य आनन्दोल्लासस्तद्वर्णनपरा द्वित्राः श्लोका दृष्टान्तरूपेणोद्धरणीयतामर्हन्ति—

'सिषिचुरवनिमम्बुवाहाः शनैः
सुरकुसुममियाय चित्रं दिवः ।
विमलरुचि भृशं नभो दुन्दुभे—
र्ध्वनिरखिलमनाहतस्यानशे ॥

आसेदुषां गोत्रभिदोऽनुवृत्त्या
गोपायकानां भुवनत्रयस्य ।
रोचिष्णुरत्नावलिभिर्विमानै—
र्द्यौराचिता तारकितेव रेजे ॥

हंसा बृहन्तः सुरसद्मवाहाः
संह्लादिकण्ठाभरणाः पतन्तः ।
चक्रुः प्रयत्नेन विकीर्यमाणै—
—र्व्योम्नः परिष्वङ्गमिवाग्रपक्षैः ॥[२],

---

१. किरात०, १८. १५,१६
२. तदेव, १७-१९

सर्गबन्धस्य किरातार्जुनीयमहाकाव्यस्याऽङ्गरूपेणैतत् संक्षिप्तमुपप्रकरण-मुपनिबद्धम् । उपप्रकरणमिदं प्रक्रान्तसंविधानकानुबन्धि किरातमहाकाव्यस्य सौन्दर्याय संपद्यत इत्यत्र नास्ति कश्चन संशयः । तृतीयमुपप्रकरणं संक्षिप्ते-नाऽनुप्रकरणत्रिकेण निष्पन्नं दृश्यते । तत्र प्रथममनुप्रकरणं धनञ्जयकृतशिवप्रत्य-भिज्ञातः परशिवस्तवरूपम् यस्य दृष्टान्तीभूता द्वित्राः श्लोका अध उद्ध्रियन्ते

'शरणं भवन्तमतिकारुणिकं
भवभक्तिगम्यमधिगम्य जनाः ।
जितमृत्यवोऽजित भवन्ति भये
ससुरासुरस्य जगतः शरणम् ॥

विपदेति तावदवसादकरी
न च कामसम्पदमभिकामयते ।
न नमन्ति चैकपुरुषं पुरुषा–
–स्तव यावदीश न नतिः क्रियते ॥

दृष्ट्वा दृश्यान्याचरणीयानि विधाय
प्रेक्षाकारी याति पदं मुक्तमपायैः ।
सम्यग्दृष्टिस्तस्य परं पश्यति यस्त्वां
यश्चोपास्ते साधु विधेयं स विधत्ते ॥[१],

अत्र धनञ्जयालम्बना शिवविषयिणी रतिरभिव्यक्ता प्रतिभाति । अतो भावध्वनिरूपं काव्यमिदं श्लोकत्रिकम् । महावीरस्य धनञ्जयस्य शिवरतिभावो नापवर्गपदप्राप्त्यै किन्तु दुर्जयशत्रुविजयाध्यवसायपरिपूर्त्यै । अतएव नैतेन भावध्वनिना युद्धवीररसे किञ्चिदपि व्यवधानमापतति । प्रत्युत भावध्वनिरयं धनञ्जयस्य धर्मयुद्धोत्साहमहाभावमेव परिपोषपदवीं प्रापयन्ननुभूयते सहृदयैः किरातकाव्यरसगृध्नुभिः ।

अत्रैव मोक्षाख्यपरमपुरुषार्थैकनिदानं भगवच्छरणवरणं धनञ्जयहृदया-भिलषितं यत्प्रतिपादितं महाकविना भारविणा 'शरणं भवन्त' मित्यादौ श्लोके

---

१. तदेव, २२, २३, २८

तस्य काचिदन्यैव कान्तिः किरातकाव्यस्य महार्थगौरवं प्रसाधयति। शरणागतिशास्त्राणि भक्तिशरणागत्योर्भेदाभेदौ सिद्धान्तयन्ति। किन्तु महाकविर्भारविर् भक्तिशरणागत्योरुपायोपेयभावं काव्यवाचा प्रकाशयन् तयोर्द्वन्द्वं प्रशमयन् प्रतिभाति। अत्र धनञ्जयस्य भगवच्छरणवरणमिदं न स्वस्याऽपवर्गायाऽपितु सर्वेषामपवर्गायेत्यपि सूक्ष्मं तात्पर्यं व्यक्तं भवति। शत्रुविजयरूपधर्मपुरुषार्थलाभमन्तरा न मोक्षरूपपरमपुरुषार्थलाभ इति निगूढोऽभिप्रायो वस्तुत एतत्प्रकरणस्य भूषणमेव संपद्यते। 'इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः'[1] इति प्रसङ्गान्तरे यदुक्तं भारविणा तदत्रत्यं भारवेः कविकर्म सर्वात्मना स्पृशति। यदि महाकविर्भारविः स्वयमपि भगवति शिवे न्यस्तभरो न भवेत् न कथमपीदृशं कवयितुं प्रभवेत्।

तृतीयोपप्रकरण एव धनञ्जयकृतं शिवस्तवनरूपं यदनुप्रकरणं तद् भारवेः प्रतिभानसम्पदः परिणामभूताया नव्यताया महाकविकालिदासस्य संस्मृतेश्च सूक्ष्ममपि स्पष्टं परिचायकं प्रतिभाति। कतिपयैर्निम्नलिखितैः श्लोकैः सर्वमेतत् स्पष्टीभवति—

'सन्निबद्धमपहर्तुमहार्यं
भूरि दुर्गतिभयं भुवनानाम्।
अद्भुताकृतिमिमामतिमाय-
स्त्वं बिभर्षि करुणामय मायाम्॥

न रागिचेतः परमा विलासिता
वधूः शरीरेऽस्ति न चास्ति मन्मथः।
नमस्क्रिया चोषसि धातुरित्यहो
निसर्गदुर्बोधमिदं तवेहितम्॥

तवोत्तरीयं करिचर्म साङ्गजं
ज्वलन्मणिः सारसनं महानहिः।
स्रगास्य पंक्तिः शवभस्म चन्दनं
कला हिमांशोश्च समं चकासति॥

---

१. तदेव, २.८

अविग्रहस्याप्यतुलेन हेतुना
समेत भिन्नद्वयमूर्ति तिष्ठतः।
तत्रैव नान्यस्य जगत्सु दृश्यते
विरुद्धवेषाभरणस्य कान्तता ॥

आत्मलाभपरिणामनिरोधै-
र्भूतसंघ इव न त्वमुपेतः ।
तेन सर्वभुवनातिग लोके
नोपमानमसि नाप्युपमेयः ॥

त्वमन्तकः स्थावरजङ्गमानां
त्वया जगत् प्राणिति देव विश्वम् ।
त्वं योगिनां हेतुफले रुणत्सि
त्वं कारणं कारणकारणानाम् ॥

रक्षोभिः सुरमनुजैर्दितेः सुतैर्वा
यल्लोकेष्वविकलमाप्तमाधिपत्यम् ।
पाविन्याः शरणगतार्तिहारिणे
तन्माहात्म्यं भव भवते नमस्क्रियायाः ॥

तरसा भुवनानि यो बिभर्ति
ध्वनति ब्रह्म यतः परं पवित्रम् ।
परितो दुरितानि यः पुनीते
शिव तस्मै पवनात्मने नमस्ते ॥

भवतः स्मरतां सदासने
जयिनि ब्रह्ममये निषेदुषाम् ।
दहते भवबीजसंततिं
शिखिनेऽनेकशिखाय ते नमः ॥

आबाधामरणभयार्चिषा चिराय
प्लुष्टेभ्यो भव महता भवानलेन ।
निर्वाणं समुपगमेन यच्छते ते
जीवानां प्रभव नमोऽस्तु जीवनाय ।।

यः सर्वेषामावरीता वरीयान्
सर्वैर्भावैर्नावृतोऽनादिनिष्ठः ।
मार्गातीतायेन्द्रियाणां नमस्तेः...
विज्ञेयाय व्योमरूपाय तस्मै ।।

अणीयसे विश्वविधारिणे नमो
नमोऽन्तिकस्थाय नमो दवीयसे ।
अतीत्यवाचां मनसां च गोचरं
स्थिताय ते तत्पतये नमो नमः ।।,[1]

अत्र 'सन्निबद्धे'त्यादिरूपः त्रिशत्तमश्लोकः अमायिनो भगवतो लीलाविग्रहरूपां मायामन्येषाञ्च सर्वेषां कर्मानुबन्धिविग्रहपरिग्रहं वर्णयन् काव्ये शास्त्रं निषिञ्चन् शास्त्रं वा काव्यमयं कुर्वाणस्सुतरां शोभते । 'न रागि चेतः' इत्येकत्रिंशत्तमश्लोकादारभ्य षट्त्रिंशत्तमश्लोकपर्यन्तं शिवस्तवविषयकमनुप्रकरणं महाकवेः कालिदासस्य कुमारसम्भवमहाकाव्ये यच्छिवस्वरूपवर्णनं तस्यच्छाययाच्छुरितमिव विभासते । पूर्ववर्तिना महाकविना कालिदासेन वर्णितमपि वर्ण्यं यन्महाकविर्भारविः स्वकृते काव्ये वर्णनाविषयीकरोति ततस्तस्य कालिदासकाव्ये तन्मयीभवनं प्रकाममभिव्यक्तं विभाव्यते । एवमेव 'या सृष्टिः स्रष्टुराद्ये'त्याद्यभिज्ञानशाकुन्तलनान्दीश्लोके प्रत्यक्षाभिरष्टाभिस्तनुभिरुपलक्षितस्य परमेश्वरस्य शिवस्य यद्वर्णनं तस्यार्थान्वियवत्त्वेऽपि 'तरसा भुवनानी'त्यादिसप्तत्रिंशत्तमश्लोकादारम्य 'अणीयसे विश्वविधारिणे नमः' इत्याद्येकचत्वारिंशत्तमश्लोकपर्यन्तं यच्छ्लोकपञ्चकं तन्नवीभूतमिव प्रतिभाति । नवत्वस्यैतस्य यत्कारणं तद्भारवेर्महाकवेः प्रतिभानमेव यत्खल्वर्थानन्त्यस्य निबन्धनत्वेनाम्नातं ध्वनिकारैरानन्दवर्धनाचार्यैः भारविणा कृतस्य पञ्चमूर्तेः शिवस्य

१. तदेव, १८.३०-४१

स्ववनस्य कालिदासकृतेनाऽष्टामूर्तेशिवस्य स्तवेन यत्सादृश्यं संवादापरनामकं न तत् प्रतिविम्बकल्पं न वाऽलेख्यप्रख्यं किन्तु तुल्यदेहिसमम् । कुतस्तुल्यदेहि-सममितिचेत् ? यतो हि भारविकृते पञ्चमूर्तिशिवस्तवे सारभूतात्मसद्भावो विराजते । अतएवाऽत्र पुराणरमणीयच्छायानुगृहीतं हि वर्ण्यवस्तु नवशरीरवत् परां शोभां पुष्यति, न तु पुनरुक्तत्वेनावभासमानं प्रतिभाति ।

पार्यन्तिके किरातार्जुनीयमहाकाव्यसर्गे शिवस्तवस्य किं स्थानं किं वा महत्त्व-मिति चेत् ? अत्रैतद्विचारणीयम् । शिवमप्रत्यभिजानानः, पार्थस्तेन सहाऽयो-धने व्याप्रियते; 'शिवोऽयम्' इति प्रत्यभिज्ञासमुदये च शिवस्य प्रणतिं विधत्ते तच्छरणं च वृण्वानः परानन्दी भवति । पार्थस्यैतत् कर्मान्तितोगत्वा तस्य बल-वीर्यावदानमेवं निकामं प्रकाशयति न तु कातरत्वम् । महाकविना भारविणा स्वकाव्यस्य निम्नोद्धृते श्लोके महर्षिव्यासोपदेशव्याजेनैवंरूपा वाचोयुक्ति-र्वितन्यते—

'लभ्या धरित्री तव विक्रमेण
ज्यायांश्च वीर्यास्त्रबलैर्विपक्षः ।
अतः प्रकर्षाय विधिर्विधेयः
प्रकर्षतन्त्रा हि रणे जयश्रीः ॥'[1]

अत्र 'प्रकर्षतन्त्रा हि रणे जयश्री'-रिति महार्थगौरवगर्भं युधिष्ठिराय प्रदत्तं व्यासोपदेशं शिवप्रसादनाय प्रकृष्टतमतपश्चरणेनाऽनुसरमाणेन पार्थेन यन्नैजः कौरवविजयाध्यवसायो करिष्यमाणयुद्धायोजनोत्साहो वा प्रकाश्यते तत् महाकाव्यस्याङ्गिभूतं धर्मयुद्धवीरं रसं सम्यगभिव्यक्तीकर्तुमलम् । अतएव महा-कविना भारविणा धनञ्जयकृतं वरयाचनरूपं निम्नाङ्कितेन श्लोकेनोपनिबद्धं चतुर्थमुपप्रकरणमुपन्यस्यते—

'आस्तित्रयशुद्धमवतः प्रियधर्म धर्मं
धर्मात्मजस्य विहितागसि शत्रुवर्गे ।
संप्राप्नुयां विजयमीश यया समृद्ध्या
तां भूतनाथ विभुतां वितराहवेषु ॥'[2]

---

१. तदेव, ३.१७

२. तदेव, १८.४३

अत्राहवेषु या विसृता धनञ्जयेन प्रार्थ्यते सा खलु 'प्रकर्षतन्त्रा हि रणे जयश्री'रिति प्रकारान्तरेण पूर्वमेव संसूचिता महाकविना भारविणा स्वकाव्यारम्भ एव स्वकाव्यान्तं स्वप्रतिभाप्रकर्षेण निध्यायतेति सर्वं समञ्जसमित्यवधेयं भारविप्रणयिभिस्सहृदयैरिति ।

शिवकृतेन धनञ्जयाय वरप्रदानेन यथेदमुपप्रकरणं परिसमाप्यते महाकाव्यञ्च परिसमाप्तिमानीयते तत्सङ्गतं श्लोकद्वयं स्मर्तव्यमेव सहृदयैः—

'इति निगदितवन्तं सूनुमुच्चैर्मघोनः
प्रणतशिरसमीशः सादरं सान्त्वयित्वा ।
ज्वलदनलपरीतं रौद्रमस्त्रं दधानं
धनुरुपपदमस्मै वेदमभ्यादिदेश ॥,

व्रज जय रिपुलोकं पादपद्मानतः सन्
गदित इति शिवेन श्लाघितो देवसंघः ।
निजगृहमथ गत्वा सादरं पाण्डुपुत्रो
धृतगुरुजयलक्ष्मीर्धर्मसूनुं ननाम ॥,'[१]

इत्थं महाकविना भारविणा किरातार्जुनीयमहाकाव्यस्य यथा विचित्रः कमनीयश्च शुभारम्भः क्रियते तथैव शुभान्तोऽपि विचित्रः कमनीय एव कृत इति निर्विचिकित्सम् ।

शिवप्रसादाद्रौद्रास्त्रप्राप्त्यनन्तरं यद्भाविवर्ण्यं न तत्र भारवेः कश्चनापि वर्णनासंरम्भो यतो हि महाकाव्येऽत्र निर्वहणसन्धेः प्रशस्तिरूपस्याङ्गस्य दशरूपके धनञ्जयेन 'प्रशस्तिः शुभशंसनम् इति परिभाषितस्य योजना कृता, तया च स्वकृतः किरातार्जुनीयमहाकाव्यरूपः रसप्रबन्धः परिसमापितः । भारवेरन्यः कविः कदाचित् महाभारते भीष्मादिपर्ववर्णितानां युद्धानां तत्र प्रदर्शितानां धनञ्जयस्य वीर्यावदानानाञ्च वर्णने व्यापृतो भवेत् । किन्तु किरातार्जुनीय-

---

१. तदेव, १८.४४, ४८

२. तदेव, १.५४

भिधाने महाकाव्ये सर्वमेतदनावश्यकं रसविघातकञ्चेति मन्वानेन महाकविना भारविणा युद्धवर्णनाविराम एव प्रसमीक्ष्य कृतः। महाभारते यद् यद् युद्धं यद् यद् वा तत्रार्जुनकृतविजयावदातं वर्णितं तत्सर्वं किरातार्जुनीयमहाकाव्यस्यैवंकृतात् परिसमापनात् सहृदयानां पुरतः महागम्भीरध्वनिरूपं परिस्फुरतीति सर्वं निरवद्यम्।

—०—

# भारवेर्धर्मयुद्धवीररसभावाभिव्यञ्जनकौशलम्

किरातार्जुनीयं नाम भारवेर्महाकाव्यं धर्मवीररसात्मकं पुरुषार्थफलं तत्तद्वर्णनीय-वस्तुवर्णनाप्रबन्धरूपं सर्गबन्धात्मकमिति तु किरातकाव्यानुरागिणां विदितमेव । 'नायकस्य कवेः श्रोतुः समानानुभवस्ततः' इति रसनिष्पादनास्वादन-न्यायेन किरातार्जुनीये महाकाव्ये यथा भारविर्धर्मवीररसभावाभिनिवेशवान् तथा तत्प्रतिभोत्थापितो नायको धनञ्जयोऽर्जुनोऽपि धर्मयुद्धोत्साहसंपत्समृद्धः । अत-एव सहृदया अप्येतर्हि महाकाव्ये धर्मवीररसभावावेशोद्दीप्तहृदया वीरं रसं रसयन्ति । भारवेर्युगे तादृश्या राजशासनस्थित्या भाव्यं यया धर्मवीररसमयस्य सहृदयानन्दनस्य जनकल्याणकरस्य महाकाव्यस्य रचना प्राप्तावसरा संवृत्ता । अस्मिन् भारविप्रतिभाप्रसूते सर्गबन्धे महाकाव्ये धर्मवीररसः कथाप्रणालिकया प्रवहति, कथा च रस्यमानतां प्राप्नोतीति किञ्चिद् विमृश्यते ।

किरातार्जुनीयमहाकाव्ये प्रारम्भतः प्रभृति समप्तिपर्यन्तं धर्मवीर एव रसस्तदुचितविभावादिसंयोजनामाहात्म्यात् निरर्गलं निस्सरति । तथाहि यः खलु मध्यमपाण्डवोऽर्जुनो धीरोदात्तनायकरूपेणात्र वर्णनाविषयीक्रियते स तु धर्मराजस्य प्रशान्तात्मनो महावीरस्य युधिष्ठिरस्य महासेनानायकः । धर्म-प्रधानयुद्धप्रियतयैव वस्तुतो धर्मयुद्धे परैरविचाल्येन दृढनिखातयूपेनेव सुदृढं स्थिरेण युधिष्ठिरेण महाबलविक्रमावतारे सत्यपि प्रियभ्रातरि भीमसेनेऽर्जुन एव महादण्डनायकपदे प्रतिष्ठापितः । शत्रुविजयाकांक्षामपि प्रशान्तान्त-

रात्मतया न्यक्कृत्य स्थिते धनञ्जयपूर्वजे महावीरे युधिष्ठिरे य उल्लसितुकाम उत्साह सागरश्चिन्नितो महाकविना तस्यैव तरङ्गायमाणा कतिपयचित्तवृत्ति-विशेषाः प्रथमसर्गे रम्यरचनया रेखयाऽङ्किता दृश्यन्ते। ये खलु चित्तवृत्ति-विशेषा वीरे रसे विशेषत आभिमुख्येन संचरमाणा व्यभिचारिभावेति संज्ञां भजमानाः भूम्नाऽनुभवविषयीक्रियन्ते तेषु 'मतिरिति' नामधेयो मनोभावः सर्व-प्रथमं व्यक्तिमायाति यं प्रतीत्य 'धृतिरिति' नाम दधानाश्चित्तवृत्तिविशेष उत्साहमुल्लासयितुं तत्र तत्र समुन्मिषन् दृश्यते। मतिरूपो यो मनोभावस्सा-मान्यतो वीरे रसे विशेषतश्च तत्प्रभेदे धर्मवीरे सञ्चरति स तु लोकानुभव-शास्त्रपरिज्ञानादिमहिम्ना कार्याकार्यविनिश्चयप्रवणमननात्मा चित्तवृत्ति-विशेषः। किरातार्जुनीयस्य मौल एव श्लोके द्वैतवने द्वादशसमा अज्ञातवासं वसन् स्वगुप्तचरनिवेदितं दुर्योधनाचारमनिर्विण्णभावेन शृण्वन् द्विषां विघा-ताय कार्यव्यापारं विनिश्चिन्वन् युधिष्ठिरो यन्निरूपितस्ततस्तस्य मतिनामा-त्मनो भावविशेषोऽभिव्यक्तिपथमानीतः छलच्छद्मना दुर्योधनेन राज्याद्विनिर्वा-सितस्य युधिष्ठिरस्य चेतसि न ग्लानिरूपश्चित्तवृत्तिविशेषः प्रवेष्टुमवकाशं लभते, अपितु शत्रुविजयव्यवसायोद्दीपनकरी मतिः स्फुरति। मतिरूपेणैव मनोभावेनाधिष्ठितान्तःकरणो युधिष्ठिरो गुप्तचरवनेचरनिवेदितान् दुर्योधनस्य सम्यक् प्रजापालनसहायसङ्ग्रहण-सैन्यबलविवर्धनादिव्यवहारान् शान्तमनस्क-स्सन् वेत्ति; निरुद्विग्नश्च तद्विघातं मनसि निश्चिनोति; तदनन्तरमेव च सर्वं विपक्षवृत्तान्तं कृष्णासदनमनाकुलं प्रविश्यानुजसन्निधौ वक्तुं प्रक्रमते। युधि-ष्ठिरस्य मत्याख्यचित्तवृत्तिविशेषं द्रौपद्या शत्रुविघातने कालातिपाताऽसह्यत्व-रूपेणौत्सुक्यनामकेन मनोभावेन निरुद्धप्रसरः सञ्जायते। नैरन्तर्येण मति-रूपस्यैव व्यभिचारिणो भावस्याऽभिव्यञ्जनं रसविघाताय स्यादिति चिन्तयता भारविणा तद्विरोधिना द्रौपदीगतेनौत्सुक्येन तस्यानुवेधः कृत इति भूषणमेवेदं धर्मवीराभिव्यञ्जनस्य न कथमपि दूषणमिति। द्रौपद्या अधिक्षेपवचांसि युधि-ष्ठिरस्य मन्युव्यवसायोद्दीपनं कर्तुमशक्तानि भवन्ति, यतो हि प्रियया प्राप्त-शत्रुतिरस्कारया भृशमधिक्षिप्तोऽपि युधिष्ठिरो नौद्धत्येन किञ्चित् कर्तु-मिच्छति, किन्तु किं कार्यं किमकार्यमिति सदसद्विनिश्चयात्मिकया मत्यैव शत्रु-विधानं विनिश्चिनोति, विजयार्थित्वेऽपि न युधिष्ठिरः शत्रुजनेषु सोपधि सन्धि-दूषणानि विधास्यतीति विज्ञातयुधिष्ठरहृदया द्रौपदी स्थिरधियो युधिष्ठिरस्य विजयमङ्गलमाशंसमाना यद्वक्तुं व्यवस्यति तत्सुष्ठूक्तं महाकविना युधिष्ठिर-समानधर्मिणा निम्नाङ्किते सर्गसमाप्तिश्लोके—

'विधिसमयनियोगाद् दीप्तिसंहारजिह्मं
शिथिलवसुमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरमुदस्यो दीयमानं दिनादौ
दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ।।'[1]

'यत्र मतिस्तत्र धृतिः' इतिन्यायेन युधिष्ठिरस्य मतिभावसहचारिणी धृतिरेव द्रौपदीमेवंरूपं युधिष्ठिरस्य विजयाशंसनं विदधातु व्यवसाययतीति निश्चप्रचमेव । अतएव शोकहर्षयोरेकरूपो युधिष्ठिर उदयास्तमनयोरेकरूपेण सूर्येणोपमितोऽवश्यमेव, शत्रुञ्जयो भवितेति भारवेर्निगूढाभिप्रायोऽपि चकास्ति । 'या शोकहर्षयोरेकरूपा सैव धृतिर्भवेद्' इतिरूपा धृतिर्या खलु धर्मवीररसाभिव्यक्तौ तदुपोद्बलनाय सञ्चरति तस्या अभिव्यञ्जनं समीचीनं कृतं भारविणेति सहृदया एव प्रमाणम् ।

द्रौपदीहृदयोद्वेलनकरमौत्सुक्यं युधिष्ठिरहृदये विवर्तमानेन मतिभावेन कथञ्चित् पराभूतमिव निश्चित्य नितराममर्षाविष्टो द्रौपदीप्रियो भीमः पुनरपि युधिष्ठिरं साममधुरैरपि तीक्ष्णवेधिभिरधिक्षेपवचनैर्विक्रमाय व्यवसाययितुं भृशं प्रक्रमते । भीमयुधिष्ठिरयोर्मनोगतं भावद्वन्द्वं महाकविर्भारविः स्फुटैरर्थभरनिर्भरैः पदैर्निपुणं यथा प्रसङ्गमभिव्यञ्जयति । यथा ह्यधः समुद्धृतयोः श्लोकयोर् भीमो युधिष्ठिरं तन्मतिञ्चाधिक्षिपन् वर्ण्यते–

'चतसृष्वपि ते विवेकिनी
नृप विद्यासु निरूढिमागता ।
कथमेत्य मतिर्विपर्ययं
करिणी पङ्कमिवावसीदति ।।

कुरु तन्मतिमेव विक्रमे
नृप ! निर्धूय तमः प्रमादजम् ।
ध्रुवमेतदवेहि विद्विषां
त्वदनुत्साहहताः विपत्तयः ।।'[2]

---

१. किरात०, १.४६

२. तदेव, २.६,२२

अत्र मतिशब्दनिवेदितत्वं मत्याख्यास्य भावस्येति न मन्तव्यम् । अत्र वीररसव्यभिचारी मत्याख्योभावः वीररसस्थायिन्युत्साहे विवर्तमानो वीरं रसमास्वादसारं निष्पादयन् प्रकाश्यते भारविणा ।

इत्थं भीमास्यामर्षिणोऽधिक्षेपैर्भृशमधिक्षिप्तोऽपि धर्मप्राणौ युधिष्ठिरो भीमं सान्त्वयितुमेवोपक्रममाणो दृश्यते । नान्यथा महाकविर्भारविर्निम्नाङ्कितं श्लोकद्वयकाव्यं कवयेत् । यथाहि—

'अतिपातितकालसाधना
स्वशरीरेन्द्रियवर्गतापिनी ।
जनवन्न भवन्तमक्षमा
नयसिद्धेरपनेतुमर्हति ॥
उपकारकमायतेर्भृशं
प्रसवः कर्मफलस्य भूरिणः ।
अनपायि निबर्हणं द्विषां
न तितिक्षासममस्ति साधनम् ॥'[1]

युधिष्ठिरो युद्धाय कृतविनिश्चयो भीमस्यामर्ष–प्रशमनाय मनसि बहुवितर्कयन् यद्विनिश्चिनोति तन्महाकविना भारविणा, निम्ननिर्दिष्टे श्लोकद्वये प्रकाशीक्रियते—

'मदमानसमुद्धृतं नृप
न वियुङ्क्ते नियमेन मूढता ।
अतिमूढ उदस्यते नया—
न्नयहीनादपरज्यते जनः ॥
अपरागसमीरणेरितः
क्रमशीर्णाकुलमूलसंततिः ।
सुकरस्तरुवत्सहिष्णुना
रिपुरुन्मूलयितुं महानपि ॥'[2]

---

१. तदेव, २.४२, ४३
२. तदेव, २.४९.५०

अत्र वितर्करूपो व्यभिचारिभावो युधिष्ठिरमनसि धृतात्मलाभः पाण्डवपक्षस्य निर्मदतां निर्मानिताञ्चाऽऽविष्कुर्वन् कौरवपक्षस्य मदोन्मत्ततां महाभिमानितां च समकालमेवाभिव्यनक्ति । अत्र भीमप्रतापयुधिष्ठिरार्जवादिभिरुद्दीपनविभावैरुद्दीपितः, तितिक्षायुद्धाध्यवसायादिभिरनुभावैरनुभावितो मतिधृतिवितर्कादिभिर्भावितो युधिष्ठिरालम्बनो युद्धोत्साहमहाभावः स्वदते किरातार्जुनीयरसिकानां हृदयाह्लादाय च प्रभवतीति प्रस्पष्टमेव । दशरूपकशास्त्रे दयावीर–युद्धवीर–दानवीररूपो यो वीरो रसस्त्रिविधो वर्णितस्सोऽत्र भारविप्रतिभया धर्मयुद्धवीररसरूपेणाभिव्यक्तो भारवेः किराताजुनीयं महाकाव्यं परामुत्कर्षकाष्ठां प्रापयन् विभाव्यते काव्यमर्मज्ञैरिति निश्चितमेव ।

मतिधृतिवितर्कादिभिर्व्यभिचारिभिर्विविधभङ्ग्या निरन्तरं प्रकाशमानैस्सहृदया उद्विजेयुरिति मनसि निश्चित्य महाकविर्भारविः प्रशममूर्ति महर्षिं व्यासमतर्कितोपनतं यद्वर्णयितु प्रक्रमते तत् सहृदयानां मनोविस्तारानन्दाय संपद्यमानमनुभूयते । नानेन महर्षिव्यासगमनवर्णनेन वीरो रसो विच्छिद्यते, किन्तु भूतपूर्वस्य वस्तुचरित्रवर्णनस्य भाविना वस्तुचरितवर्णनेन तदनुषङ्गिभावाभिव्यञ्जनेन च परस्परं सिसाधयिषिते सम्बन्धे कयाचन वैचित्र्या तस्य वीररसस्य साहाय्यमेव संपाद्यते । प्रशमवृत्तेर्युधिष्ठिरस्य सामर्षहृदयस्य च भीमस्य यत्परस्परं द्वन्द्वं तद् व्यासदर्शनमात्रेण प्रशाम्यति । को न नाम सहृदयः काव्यरसिको महर्षिव्यासवर्णनापरानिमान् श्लोकान् मनसि पौनःपुन्येनावर्तयन् परमानन्दभाग् भवेत् ।

'प्रसादलक्ष्मीं दधत समग्रां
वपुःप्रकर्षेण जनातिगेन ।
प्रसह्य चेतस्सु समासजन्त–
मसंस्तुतानामपि भावमार्द्रम् ॥

अनुद्धताकारतया विविक्तां
तन्वन्तमन्तःकरणस्य वृत्तिम् ।
माधुर्यविस्रम्भविशेषभाजा
कृतोपसम्भाषमिवेक्षितेन ॥'[1]

---

१. तदेव, ३.२, ३

अत्राप्यतर्कितोपनतस्य वपुष्मत इव पुण्यसञ्चयस्य महर्षेर्व्यासस्य दर्शनमात्रेण समुज्झितज्ञातिवियोगखेदस्य युधिष्ठिरस्य धर्मवीरोत्साहसम्भृतहृदये प्रसत्तिरूपो व्यभिचारिभावः समुदयावस्थो व्यञ्जनाप्रणाल्या संयोजितो भारविणा महाकविना किमपि रसौचित्यचारुकामनीयकं बिभर्ति । यतो हि निम्नाङ्किते श्लोके महर्षेर्व्यासस्याऽपि युधिष्ठिरदर्शनेन कश्चन मनःप्रसादो वर्णितोऽवलोक्यते—

'तथापि निघ्नं नृप ! तावकीनैः
प्रह्वीकृतं मे हृदयं गुणौघैः ।
वीतस्पृहाणामपि मुक्तिभाजां
भवन्ति भव्येषु हि पक्षपाताः ॥'[१]

इतोऽग्रे निम्नलिखितश्लोकत्रये धर्मराजस्य युधिष्ठिरस्य सात्त्विको गाम्भीर्यरूपो गुणः स्थैर्यरूपेण गुणेन सहचरितो महर्षिव्यासवचोभङ्ग्या यद् वर्ण्यते भारविणा ततोऽपि युधिष्ठिरस्य युद्धाध्यवसाय एव स्थिरीक्रियते—

'पथश्च्युतायां समितौ रिपूणां
धर्म्यां दधानेन धुरं चिराय ।
त्वया विपत्स्वप्यविपत्तिरम्य—
माविष्कृतं प्रेमपरं गुणेषु ॥

विधाय विध्वंसमनात्मनीनं
शमैकवृत्तेर्भवतश्छलेन ।
प्रकाशितत्वन्मतिशीलसाराः
कृतोपकारा इव विद्विषस्ते ॥

लभ्या धरित्री तव विक्रमेण
ज्यायांश्च वीर्यास्त्रबलैर्विपक्षः ।
अतः प्रकर्षाय विधिर्विधेयः
प्रकर्षतन्त्रा हि रणे जयश्रीः ॥'[२]

१. तदेव, ३.१२

२. तदेव, ३.१५–१७

अतः परं युधिष्ठिरसत्त्वगतमेव गाम्भीर्यादिगुणं भूयोऽपि परिवर्धितबलं व्यञ्जयितुं प्रतिपक्षबलीयस्त्वं वर्णितं भारविणा । तत्रादौ प्रतिपक्ष-महादण्डनायकस्य भीष्मस्य वर्णनं यथा—

"त्रिः सप्तकृत्वो जगतीपतीनां
हन्ता गुरुर्यस्य स जामदग्न्यः ।
वीर्यावधूतः स्म तदा विवेद
प्रकर्षमाधारवशं गुणानाम्" ॥

यस्मिन्ननैश्वर्यकृतव्यलीकः
पराभवं प्राप्त इवान्तकोऽपि ।
धुन्वन्धनुः कस्य रणे न कुर्या—
न्मनो भयैकप्रवणं स भीष्मः ॥[1]

तदनन्तरं द्रोणस्य कौरवमहासेनापतेर्यथा—

सृजन्तमाजाविषुसंहतीर्वः
सहेत कोपज्वलितं गुरुं कः ।
परिस्फुरल्लोलशिखाग्रजिह्वं
जगज्जिघत्सन्तमिवान्तवह्निम् ॥[2]

पर्यन्ते च कौरवमहाबलाधिकृतस्य कर्णस्य यथा—

निरीक्ष्य संरम्भनिरस्तधैर्यं
राधेयमाराधितजामदग्न्यम् ।
असंस्तुतेषु प्रसभं भयेषु
जायेत मृत्योरपि पक्षपातः ॥[3]

इत्थमुत्तरोत्तरं प्रबलानां प्रतिपक्षिणां वर्णनेन भारविः स्वाभीष्टं सिसाधयिषुः प्रतीयते । तस्य यदभीष्टं तद् युधिष्ठिरहृदये युद्धोत्साहसंधुक्षणमेव ।

---

१. तदेव, ३.१८, १९

२. तदेव, ३.२०

३. तदेव, ३.२१

युधिष्ठिरहृदये च संधुक्षित उत्साहो भाविनस्तन्महाबलाधिकृतस्यैतन्महाकाव्यनायकस्य धनञ्जयस्यार्ऽर्जुनस्य हृदये विवर्तमानं विवर्धमानं च युद्धोत्साहं सहस्रगुणं समुद्दीपयन् प्रतिभाति। अवश्यम्भाविनि कुरुपाण्डवमहाभारते स्वानुजे स्वमहासेनानायके धनञ्जये सन्न्यस्तसमग्रसमरभरः पार्यन्तिकविजयनिश्चयेन च समाश्वस्तहृदयो धर्मराजो युधिष्ठिरो भारवेः काव्यरङ्गादपुनःप्रत्यावर्तनमपसरति। "श्रियः कुरूणा"[1] मित्यादिकाव्यप्रस्तावनानन्तरं यो युधिष्ठिरो नायकायमान इव भावनया भावितः सहृदयैः तत्स्थाने तदग्रे धनञ्जय एव नायको निरीक्ष्यते। धनञ्जयस्य विजयो धर्मराजस्य युधिष्ठिरस्यैव विजयः। न महाकवेर्माघस्य प्रतिभा नायक चित्रणेभारवेः प्रतिभां स्पर्द्धितुमलम्, तदतिवर्तनस्य तु कथैव दूरे। शिशुपालवधमहाकाव्ये श्रीकृष्ण एवाऽऽदित आरभ्य शिशुपालं प्रतिनायकं योद्धुं हन्तुं च विक्रममाणश्चित्रितः। नायकनिरूपणविषये भारविर्नाटकीयं किञ्चिद्वैचित्र्यं प्रदर्शयति यत्खलु शिशुपालवधमहाकाव्येऽदृष्टचरमेव। भारविणा वैचित्र्येणानेन सहृदयसामाजिकहृदयेषु किमप्यौत्सुक्यमुत्कन्धरीक्रियते यस्य माघकाव्ये दर्शनमशक्यमेव। भारवेः स्वरचितमहाकाव्यपूर्वरङ्गे—भारविरचितः पूर्वरङ्गोऽयं 'श्रियः कुरूणाम्'[2] इत्यादित आरभ्य 'आकारमाशंसितभूरिलाभम्'[3] इत्यादि पर्यन्तं प्रचलति युधिष्ठिरं नायकमिव वर्णनाविषयीकुर्वन् लक्ष्यते, किन्तु 'आकारमाशंसितभूरिलाभम्,'[4] इत्यादेरनन्तरं सर्व एवैतन्महाकाव्यसामाजिकः सुधीरं महावीरमर्जुनं धनञ्जयमेव महाकाव्यनायकधुरां निरायासं निर्वहन्तं वर्णयति। एतद्वैचित्र्यं मनसि कुर्वतां सहृदयसामाजिकानां विस्मयाविष्टं मनो धनञ्जयचिन्तां कुर्वन् धर्मयुद्धवीररसास्वादनाय प्रक्रमते। नेदं किरातार्जुनीयं नाम महाकाव्यमनेकनायकम्। एकनायकमेतत्। नायकश्च न धर्मराजो युधिष्ठिरः। कयाचन व्यपेक्षया स प्रातिभासिको नायको भवेत्। धनञ्जयोऽर्जुन एव नायको यो हि पारमार्थिकः। आस्तामेतद्विषयान्तरम्। प्रकृतमनुसरामः।

स्ववीर्यबलोत्साहप्राग्भारेणैतन्महाकाव्यमहारङ्गमञ्चं समारूढस्य धनञ्जयार्ऽर्जुनस्य चित्रणं प्रक्रम्य कुतस्तरां शरद्वर्णनं प्रारभ्यते महाकविना भारविणा? इति भवति काचन जिज्ञासा। तत्समाधानं त्वेतत्। कुरुदेशस्य भूमण्डले,

---

१. तदेव, १.१

२. तदेव

३. तदेव, ३.२७

४. तदेव

नभोमण्डले जलमण्डले च विकीर्णशोभां शरदं साक्षात्कुर्वाणो नायकोऽर्जुनोऽत्र वर्ण्यते। कुतस्तरां नायको धनञ्जयो दुर्योधनं प्रतिनायकं विजित्य स्वाग्रजाय युधिष्ठरायैतादृशं समृद्धं कुरुदेशं समर्पयितुं न बद्धपरिकरो भवेत्। यद्यपि भारविणैतत् सर्वं न सर्गशो वर्णनेन प्रकाशितम्, किन्तु महाकाव्यसमाप्तौ–

'व्रज जय रिपुलोकं पादपद्मानतः सन्
गदित इति शिवेन श्लाघितो देवसंघैः।
निजगृहमथ गत्वा सादरं पाण्डुपुत्रो
धृतगुरुजयलक्ष्मीर्धर्मसूनूं ननाम ॥'[1]

इति श्लोकं विरचयता व्यञ्जनाविषयीक्रियते, सहृदयसामाजिकहृदयदर्पणे सम्यगाभास्यते, किं बहुना वस्तुतो वैयासिकस्य महाकाव्यात्मकस्य महाशास्त्रशरीरस्य महाभारतस्य यो महानन्तर्निगूढ आत्मा तत्त्वज्ञानप्रख्यः प्रशमस्वरूपस्सोऽपि सहृदयहृदयेभ्यो निभृतं समर्प्यते। शिशुपालवधमहाकाव्यस्य परिसमाप्तौ नैतादृशो गभीरो भावोऽभिप्रायो वाऽभिव्यक्तिपथमानीयमानः प्रतिभाति। किन्तु किरातार्जुनीयमहाकाव्यस्य रसध्वनिर्यैस्सहृदयैः काव्यसमाप्तौ हृदयङ्गमीकृतस्ते त्वहमहमिकया 'गच्छामि शृण्वन्'[2]इवेति विचित्रमलौकिकं कञ्चनानन्दमनुभवन्ति।

इत्थं धनञ्जयस्याऽर्जुनस्य संराधनाय समागतां शरदं वर्णयन् भारविः सर्गस्याऽस्य काव्यात्मकं किमप्यौचित्यं प्रकाशयति। निम्नाङ्कितः श्लोकः शरदा कृतमर्जुनस्य महान्तमुपकारं स्वार्थे गर्भीकुर्वन् मनोरमः प्रतिभाति—

इयं शिवाया नियतेरिवायतिः
कृतार्थयन्ती जगतः फलैः क्रियाः।
जयश्रियं पार्थ पृथूकरोतु ते
शरत्प्रसन्नाम्बुरनम्बुवारिदा ।'[3]

शरदाऽर्जुनस्य शुभाशंसनं द्यावापृथिवीभ्यां शुभाशंसनमिव सञ्जायते। शुभासनं च कौरवविजयाशंसनमेव। अतो नाऽनेन शरद्वर्णनेन धनञ्जयगतस्य

१. तदेव, १८.४८
२. मृच्छकटिकम्,
३. किरात ४-३१

धर्मयुद्धोत्साहस्याऽवरोधः क्रियते, अपितु परिवर्धनमेव विधीयते ।

अग्रे च पञ्चमे सर्गे हिमवतो विशदं वर्णनं दृश्यते । किं हिमवद्वर्णनेन धनञ्जयहृदयोत्साहस्य स्रोतःप्रवाहोऽवरुध्यते ? नेति ब्रूमः । यतो हि उत्तर-कुरुदेशोऽपि पाण्डवानां राज्यसीमान्तर्गत एव सन्निविष्टोऽभवत् । तदुत्तरस्यां दिशि देवतात्मनो हिमालयनाम्नो नगाधिराजस्य लोकोत्तरामैश्वर्यसम्पत्तिं दर्शं दर्शमेव तच्छिखरे शिवाराधननाम तपस्तप्तुं धनञ्जयस्य गमनं सम्भवि । हिमालयो धनञ्जयेन साक्षात्कृतोऽतस्तच्छोभावर्णनं प्राप्तावसरमेव । महा-कविना कालिदासेन वर्णितस्य हिमालयस्य तदनुरूपं वर्णनं कृतं भारविणा किन्तु क्वापि वर्जनीयशब्दहरणरूपोऽर्थहरणरूपो वा दोषो नापतितो येन रसविघातस्य कोऽपि शङ्कातङ्कः संभाव्येत । हिमालयस्य शिखरारोहणे धन-ञ्जयस्य पुरुषकार एव तत्तुङ्गत्वस्य मापनाय मानदण्ड इव निर्दिष्टो भारविणा दृश्यतामधोलिखितः श्लोकः —

'तमनतिशयनीयं सर्वतः सारयोगा–
दविरहितमनेकेनाङ्कभाजा फलेन ।
अकृशमकृशलक्ष्मीश्चेतसाशंसितं स
स्वमिव पुरुषकारं शैलमभ्याससाद ।।'[1]

यथा तत्तत्सारयोगे त्रिभुवनेनाऽप्यनतिशयनीयः सर्वकार्यसिद्धेस्साधको हिमालयो धनञ्जयेन स्वपुरुषकार इवाऽवलोकितः कामप्यलौकिकीं श्रियं बिभर्ति तथैव हिमालयस्योत्तुङ्गशिखरारोहे धनञ्जयस्य बलवीर्योत्साह-संपत्-समृद्धः पुरुषकारोऽपि लोकातिक्रान्त एव संलक्ष्यते । हिमालयो धनञ्जयस्य पौरुषं दर्शं दर्शं विस्मयते, धनञ्जयश्च हिमालयस्येति । हिमालयेन समाशंस-नीयपुरुषकारो धनञ्जयः कथं न सर्वं समभिलषितं संसाधयेत् । एवं धनञ्ज-यस्य पौरुषं तत्तच्छत्रुविजयि संभवितेति सूक्ष्मं संसूच्यते हिमालयवर्णनप्रकरणे-नेति सर्वमेतत्समञ्जसम् ।

षष्ठोऽपि सर्गो, नैतन्महाकाव्यान्तर्व्यापिनो धर्मयुद्धवीररसस्य निष्पत्तौ न वा तद्रसनासम्पत्तौ काञ्चिदपि विघ्नविहतिं विदधाति । अत्र सर्गे हिमा-लयेन कृतस्य धनञ्जयाभिनन्दनस्य धनञ्जयस्वागतस्य च विशदं चित्रमुन्मी-लितं किरातार्जुनीयकविना । उत्तरकुरुराजसीमापालेन हिमालयेन धनञ्ज-

१. तदेव ५.५२

यस्य यादृशमातिथ्यमाचरितं वर्ण्यते भारविणा तादृशं तु धनञ्जयस्य नायकस्य माहात्म्यानुरूपमेव । हिमालयेन मानितस्य सत्कृतस्य धनञ्जयस्य तपःशिखरारोहः सुकर इत्येवाऽत्र नाभिव्यज्यते, किन्तु धनञ्जयेन करिष्यमाणः शत्रुराजपराजयोऽपि सुकर एवेति गूढार्थोऽपि संसूच्यते ।

निम्ननिर्दिष्टा श्लोकत्रयी प्रमाणरूपेणाऽत्र परिगृहीतुं शक्या—

'स बिभर्ति भीषणभुजङ्गभुजः
पृथु विद्विषां भयविधायि धनुः ।
अमलेन तस्य धृतसच्चरिता—
श्चरितेन चातिशयिता मुनयः ।।

मरुतः शिवा नवतृणा जगती
विमलं नभो रजसि वृष्टिरपाम् ।
गुणसम्पदानुगुणतां गमितः
कुरुतेऽस्य भक्तिमिव भूतगणः ।।

उरु सत्त्वमाह विपरिश्रमता
परमं वपुः प्रथयतीव जयम् ।
शमिनोऽपि तस्य नवसङ्गमने
विभुतानुषङ्गि भयमेति जनः ।।'[1]

अतः स्पष्टमिदं यत् हिमालयवर्णनाय न हिमालयवर्णनं रम्योपसंहारमुपक्रान्तं भारविणा किन्तु हिमालयशिखरारूढस्य धनञ्जयस्य तपस्विन उरुसत्त्वं, जयश्रिया भाविनं परिष्वङ्गं, लोकातिशायि च क्षात्रं तेजः प्रकाशयितुमिति । अतः धर्मयुद्धवीररसस्रोतस्स्रवदेव विभाव्यतेऽत्र विभावानुभावाभ्यां सुदृढसंयोजिताभ्यां स्थायिन उत्साहस्य समाक्षेपस्सुकर एवात्र न दुष्करः ।

सप्तमे सर्गे किञ्चिद् विषयान्तरावतनमिव प्रतीयते ? किन्तु नैतद् रसविघातकमपि त्वन्ततो गत्वा रसोपकारकमेव सञ्जायते । सर्गेऽत्र देवेन्द्रादिष्टानां देवाङ्गनानां धनञ्जयस्य मनोमोहनाय तपोभ्रंशाय, वीर्यबलोत्साह-

---

१. तदेव ६.३२, ३३, ३५

प्रध्वंसनाय च हिमालयोत्तुङ्गशिखरमिन्द्रकीलं प्रति प्रस्थातुकामानामश्व–गज–रथादिसन्नाहसम्भाराभोगस्य वर्णनवैचित्र्यं विभाव्यते । नायकेन धनञ्जयेनार्जुनेनान्तःशत्रवः काममदमोहादयो यावन्न निर्जिताः, तावद् दुर्योधनादीनां बहिःशत्रूणां विजयः कृतोऽप्यकृतकल्पो न मङ्गलाय भवितेति विनिश्चिन्वता महाकविना भारविणा प्रकरणमिदं महाकाव्यप्रबन्धे संयोजितम् । संयोजनयाऽनया रत्युद्दीपनविभावस्य रथाद्यारूढमदनास्त्रभूतदेवाङ्गनारूपस्य निर्वेदाख्यतत्त्वज्ञानरूपेण स्थायिना सम्भाव्यमानसंघर्षोऽत्राऽभिव्यञ्जियिषितः । इत्थं वीरस्य विरोधी रसः शृङ्गारो वीरं विरोद्धुमापतति किन्तु विरोद्धुं न प्रभवति । अत एव निम्नाङ्कितश्लोकयोर्महाकविर्भारविः तपोलग्नं धनञ्जयं निर्दिश्य निभृतमेवं कवयति—

'नृपतिमुनिपरिग्रहेण सा भूः
सुरसचिवाप्सरसां जहार तेजः ।
उपहितपरमप्रभावधाम्नां
न हि जयिनां तपसामलङ्घ्यमस्ति ।

'यमनियमकृशीकृतस्थिराङ्गः
परिददृशे विधृतायुधः स ताभिः ।
अनुपमशमदीप्ततागरीयान्
कृतपदपंक्तिरथर्वणेव वेदः ।-[1]

श्लोकद्वयकाव्यमिदं भावनया भावितं रतिपराजये पर्यवस्यति । प्रशमवेदिता च विजयोल्लासमाविष्करोति ।

अष्टमे सर्गे देवाङ्गनानां वनविहारवर्णनं प्रकान्तम् । वनविहारणीनां देवाङ्गनानां मान्मथरससंप्लुता हावभावा धनञ्जयमनोलोभनाय पुनः पुनः विविधाभिर्वैचित्रीभिर्निपुणं वर्णिता महाकाव्यस्याऽस्याङ्गिनो रसस्य विरोधिन इव प्रतीयन्ते । किन्तु विरोधिभिरमीभिर्नाङ्गिनो क्षतिर्भवति, प्रत्युत विरोधिन एवैते तस्योपकारमाचरन्तो दृश्यन्ते । धनञ्जयमर्जुनं विहाय को न नाम श्लोकयुग्मेऽध उल्लिखिते चित्रितं कामाभिष्वङ्गमनुभवन् तपोभ्रष्टो भवेत् ।

---

१. तदेव, १०.६, १०

'कलत्रभारेण विलोलनीविना
गलद्दुकूलस्तनशालिनोरसा ।
वलिव्यपायस्फुटरोमराजिना
निरायतत्वादुदरेण ताम्यता ।।

विलम्बमानाकुलकेशपाशया
कयाचिदाविष्कृतबाहुमूलया ।
तरुप्रसूनान्यपदिश्य सादरं
मनोधिनाथस्य मनः समाददे ।।'[1]

एतावताऽपि व्यामोहव्याकोपेन नायको धनञ्जयो विचलित एव तपस्तप्तुं निश्चिनोति दृढधृतेर्मतिमतो किं नाम दुष्करम् ।

नवमे सर्गे जलक्रीडातो विरतानामात्तचित्रपरिधानविभूषाणां सुरतसन्नाहवतीनां सुरनारीणां सूर्यास्तमनवेलायां नानाविधदृश्यदर्शनं यद्वर्णितं भारविणा तद्रसापकर्षकं नवेति विचारणीयं भवति । सर्गोऽयमग्रिमसर्गस्य दशमसर्गस्य पीठिकाबन्ध इव प्रतिभाति । धनञ्जयमर्जुनं तपोभ्रष्टं कर्तुमप्सरसो दशमसर्गे तास्ताः कामचेष्टाः प्रदर्शयन्त्यो वर्णिताः । अत्र सर्गे तासामेवाप्सरसां चन्द्रोदयवेलायां शीतसुगन्धिसमीरसुखायां पानगोष्ठी–मदमूर्च्छनप्रियालिङ्गनप्रभृतयो मनोभवविकारा विशदं वर्णिताः । सर्वोऽयं लोकः कामजलाप्लावे ब्रूडितो भवेन्नाम, किन्तु धनञ्जयस्यार्जुनस्य निर्विकारता निरातङ्केव भविता इत्थं मनोविकारिणः कामस्य माहैश्वर्यपृष्ठ एव धनञ्जयस्याऽर्जुनस्य निर्विकारमनस्कता बलवीर्योत्साहप्रभविष्णुता च वर्ण्यमाना रसमङ्गिभूतमुपकर्तुं प्रभवेन्नान्यथेति । भारविविरचितं प्रकरणमिदं रसप्रवाहस्य प्रणालकल्पमेव भावयितुमलम् ।

दशमः सर्गः सुरसुन्दरीणां सुरपतिसूनोरर्जुनस्य धनञ्जयस्य तपोभङ्गार्थं यः प्रयत्नस्तस्योपवर्णनाय विरचितः । बहुभिरनुभावविभवैः सन्नद्धोऽपि शृंगारो धनञ्जयस्य तत्त्वज्ञानं योद्धुं न समर्थ इति भावं मनसि निधाय भारविणा निबद्धोऽयं सर्गोऽतिसुन्दरः संलक्ष्यते । धर्मयुद्ध वीररसप्रबन्धेन समं साङ्गत्यं बिभर्ति मान्मथरसप्रकरणमिदम् । एतत्प्रकरणनिवेशोऽत्र रसप्रबन्धे महाकवेर्भारवेः

---

१. तदेव, ८.१७, १८

काव्यनिर्माणकौशलमेवाभिव्यनक्ति । अत्र सर्वे निम्ननिर्दिष्टा श्लोका दर्शनीयता-मर्हन्ति —

'अभिभवति मनः कदम्बवायौ
मदमधुरे च शिखण्डिनां निनादे।
जन इव न धृतेश्चचाल जिष्णु-
र्न हि महतां सुकरः समाधिभङ्गः ।

अलसपदमनोरमं प्रकृत्या
जितकलहंसवधूगति प्रयातम् ।
स्थितमुरुजघनस्थलाति-
भारादुदितपरिश्रम जिह्मतेक्षणं वां ।।

भृशकुसुमशरेषु पातमोहा—
दनवसितार्थपदाकुलोऽभिलाषः ।
अधिकविततलोचनं वधूना—
—मयुगपदुन्नमितभ्रु वीक्षितं च ।

रुचिकरमपि नार्थवद्बभूव
स्तिमितसमाधिशुचौ पृथातनूजे ।
ज्वलयति महतां मनांस्यमर्षे
न हि लभतेऽवसरं सुखाभिलाषः ।'[1]

उपर्युक्तं श्लोकचतुष्टयात्मकं काव्यं भावनया भावितं रतिपराजये पर्यवस्यति । धनञ्जयस्यार्जुनस्य प्रशमवेदिता सारिष्ठेति भावोऽपि प्रकाश्यते । सर्वैरेव तैस्तै रागविवर्धनसाधकसंभारैर्भृ शमधिक्षिप्तोऽपि धनञ्जयो निर्जितसर्वसुखैषणः संयमशीलो धृतिमांश्च विराजते इति न विच्छिद्यते तद्हृदयेन सह सहृदयसामाजिकहृदयस्य साधारणीकृतिः । अतएव रसप्रवाहोऽपि महोत्साहमहाभावनिष्पन्दो निर्विघ्नं प्रवहति । न क्वाऽपि तत्र रसापकर्षणमिव प्रतिभाति ।

---

१. तदेव, १०.२३,६०-६२

एकादशस्सर्गोऽनुष्टुब्वृत्तबद्धो देवेन्द्रागमन–देवेन्द्रधनञ्जयसंवादादिवर्णनासंकुलो नायकं धनञ्जयं मुनिरूपधरमप्यप्रधृष्यबलवीर्यसारं प्रदर्शयति। धर्मयुद्धवीरस्याऽऽलम्बनभूतस्यार्ऽजुनस्य लोकोत्तरः शत्रुपराभवोत्साहो भावनया साक्षात्कारेणानुभवविषयीभूतः स्वदते सहृदयेभ्यः। केचनैतत्सर्गस्थाः श्लोकाः प्रमाणरूपेणाध उद्ध्रियन्ते—

'क्षत्रियस्तनयः पाण्डोरहं पार्थो धनञ्जयः।
स्थितः प्रास्तस्य दायादैर्भ्रातुर्ज्येष्ठस्य शासने॥

कृष्णद्वैपायनादेशाद् बिभर्मि व्रतमीदृशम्।
भृशमाराधने यत्तः स्वाराध्यस्य मरुत्वतः॥

उदाहरणमाशीःषु प्रथमे ते मनस्विनाम्।
शुष्केऽशनिरिवामर्शो यैररातिषु पात्यते॥

न सुखं प्रार्थये नार्थमुदन्वद्वीचिचञ्चलम्।
नाऽनित्यताशनेस्त्रस्यन् विविक्तं ब्रह्मणः पदम्॥

वंशलक्ष्मीमनुद्धृत्य समुच्छेदेन विद्विषाम्।
निर्वाणमपि मन्येऽहमन्तरायं जयश्रियः॥

विच्छिन्नाभ्रविलायं वा विलीये नगमूर्धनि।
आराध्य वा सहस्राक्षमयशः शल्यमुद्धरे॥'[1]

सर्वोऽपि सहृदयलोक उपर्युद्धृतश्लोकवर्णितेन धनञ्जयेन नायकेन सह तादात्म्यं समरसीभावं वा स्थापयितुं समर्थः। एवं स्थिते धर्मयुद्धवीररसस्याऽऽस्वादोऽयत्नोपनत एव तत्कृत इति कः संदेहः। अत्र भारविणा धनञ्जयोऽर्जुनस्तथाऽप्रतिवार्यवीर्यश्चित्रितो यथा सर्वेऽपि सहृदयास्तत्र प्रीतियोगं बिभ्रति। तत्समानहृदयत्वञ्च लभमानाः बलवीर्योत्साहसम्पत्समृद्धाश्च संजायन्त इति तु कैमुतिकन्यायत एव सिद्धम्।

आगामी द्वादशः सर्गो धनञ्जयपरीक्षासर्गः। शिवाराधनाय तपोनिरतस्य महावीरस्य धनञ्जयस्य वपुष्मत्ता बलवीर्यधैर्यशालिता च निम्नाङ्कितेषु श्लोकेषु स्पष्टं द्रष्टुं शक्यते—

---

१. तदेव, ११.४५, ४६, ६५, ६६, ६९, ७९

'वपुरिन्द्रियोपतपनेषु
सततमसुखेषु पाण्डवः ।
व्याप नगपतिरिव स्थिरतां
महतां हि धैर्यमविभाव्यवैभवम् ।।

'न विसिस्मिये न विषसाद्
मुहुरलसतां न चाददे ।
सत्त्वमुरुधृति रजस्तमसी
न हतः स्म तस्य हतशक्तिपेलवे ।।'

'कवचं स बिभ्रदुपवीत—
पदनिहितसज्यकार्मुकः ।
शैलपतिरिव महेन्द्रधनुः-
परिवीतभीमगहनो विदिद्युते ।।'

तमुदीरितारुणजटांशु—
मधिगुणशरासनं जनाः ।
रुद्रमनुदितललाटदृशं
ददृशुर्मिमन्थिषुमिवासुरीः पुरीः ।।

'मरुतां पतिः स्विदहिमांशु-
रुत पृथुशिखः शिखी तपः ।
तप्तुमसुकरमुपक्रमते
न जनोऽयमित्यवयये स तापसैः ।।[1]

नाऽत्र सहृदयानुभवः शत्रुविजयोत्साहरूपं विषयं पराकृत्य विषयान्तरं गवेषयितुकामः । सहृदयैरनुभूयमानो वीरोत्साहः सुतरामानन्दायैव सञ्जायते तेषामिति तु सुनिश्चितमेव ।

शिवप्रसादनाय दुष्करे तपसि लग्नस्य धनञ्जयस्य लोकातिशायिनं महिमानं मुनिजनमुखेन वर्णयन् यदाह भारविर्निम्ननिर्दिष्टयोः श्लोकयोस्तेन नाय-

---

१. तदेव १२. ३, ५, ९, १४, १५

कस्य बलवीर्यपराक्रमपराभवः सागरवीचिमालासु सूर्यरश्मिच्छटाच्छुरणमिव बहुलीभवन् विलोक्यते—

चलनेऽवनिश्चलति तस्य
करणनियमे सदिङ्मुखम् ।
स्तम्भमनुभवति शान्तमरुद्—
—ग्रहतारकागणयुतं नभस्तलम् ।।
स तदोजसा विजितसार—
—ममरदितिजोपसंहितम् ।
विश्वमिदमपि दधाति पुरा
किमिवास्ति यन्न तपसामदुष्करम् ।।[1]

धनञ्जयसदृशस्य नायकस्य मनोभावेन शत्रुविजयोत्साहरूपेणैव भाव्यम् । अत्र सहृदया अपि धनञ्जयेन समानहृदयीक्रियमाणा महान्तमात्मानन्दमनुभवन्ति ।

शङ्करेण दृष्टो धनञ्जयो भारविणा सत्त्वोत्साहसम्पन्न एव वर्ण्यते येनाऽस्य धर्मयुद्धवीररसप्रबन्धनायकत्वं सुष्ठु निर्वहति । दृश्यतामयं श्लोकः—

'तपसा निपीडितस्य कृशस्य
विरहितसहायसम्पदः ।
सत्त्वविहितमतुलं भुजयो—
र्बलमस्य पश्यत मृधेऽधिकुप्यतः ।'[2]

त्रयोदशे सर्गे समरायेव समाजुहूषमाणस्य धनपोत्रविदीर्णशालमूलस्य निविडस्कन्धनिकाषरुग्णवप्रस्य महाजवस्य महावराहस्य धनञ्जयस्य च नायकस्य परस्परं बलवीर्याकलनं वर्ण्यते भारविणा । भारविवर्णितमेतादृशं नायकं धनञ्जयं मनोनयनाञ्जलिभिः पायं पायं कस्य न नाम सहृदयस्य बलवीर्योद्रेकोत्फुल्लहृदयता संपद्येत । एवम्भूते च हृदयाध्माने युद्धवीरस्य रसस्य कयाचिद् व्यपेक्षया भवत्येव समाक्षेपः । आपातिकानुभवो वेति मन्तव्यं सुधीभिर्विचारपूर्वकम् ।

१. तदेव, १२.२५, २६
२. तदेव १२.३६

अत्र सर्गे श्लोकेनैकेन निम्ननिर्दिष्टेन वर्णितो धनञ्जयो नायको वीररसस्याऽऽधिदैवतमिवावभासते सहृदयजनहृदयदर्पणेषु—

'प्रविकर्षनिनादभिन्नरन्ध्रः
पदविष्टम्भनिपीडितस्तदानीम् ।
अधिरोहति गाण्डिवं महेषौ
सकलः संशयमारुरोह शैलः ॥'[1]

एतादृशं वीररसस्याऽऽधिदैवतं मनसा कल्पयन्तः सहृदयाः कथं न नाम वीररसास्वादचमत्काराय स्पृहयेयुः ।

उपर्युद्धृताच्छलोकादग्रे स्थिते निम्नाङ्कि्कते श्लोके शिवमपश्यतः शिवेन च दृष्टस्य धनञ्जयस्य नायकस्य वीररसाऽऽधिदैवतभावः सुतरां परिपुष्यति:—

'ददृशेऽथ सविस्मयं शिवेन
स्थिरपूर्णायतचापमण्डलस्थः ।
रचितस्त्रिसृणां पुरां विधातुं
वधमात्मेव भयानकः परेषाम् ॥'[2]

हरकिरातपृतनापतिना वनेचरेन्द्रेण दृष्टः संभाषितश्च धनञ्जयोऽर्जुनो भारविणा महता मनःसंरम्भेण वर्ण्यते निम्नोल्लिखिते श्लोकत्रये—

'दीपितस्त्वमनुभावसंपदा
गौरवेण लघयन् महीभृतः ।
राजसे मुनिरपीह कारयन्
आधिपत्यमिव शातमन्यवम् ॥

तापसोऽपि विभुतामुपेयिवान्
आस्पदं त्वमसि सर्वसम्पदाम् ।
दृश्यते हि भवतो विना जनै-
रन्वितस्य सचिवैरिव द्युतिः ॥

१. तदेव, १३. १६
२. तदेव, १३. १७

क्लेपयन्नहिमतेजसं त्विषा
स त्वमित्थमुपपन्नपौरुषः ।
हर्तुमर्हसि वराहभेदिनं
नैनमस्मदधिपस्य सायकम् ।।[१]

एवं वर्णितो धनञ्जयो नायको वनेचरस्याऽधिक्षेपवचनं नार्हति । किन्तु चतुर्दशसर्गस्थे मौल एव श्लोके वनचराऽधिक्षिप्तस्य विविधविरुद्ध-मनोभावसंरम्भेण प्रकथितस्य तस्य धैर्यादिसत्त्वगुणसम्पत्सुतरामुल्लास्यते महाकविना —

ततः किरातस्य वचोभिरुद्धतैः
पराहतः शैल इवार्णवाम्बुभिः ।
जहौ न धैर्यं कुपितोऽपि पाण्डवः
सुदुर्ग्रहान्तःकरणा हि साधवः ।।

क्रोधसंरब्धस्याऽपि प्रशान्तसंरम्भस्याऽर्जुनस्यैतादृशं वर्णनं कस्यचन लोका-तिशायिवीर्यपराक्रमस्य महात्मनो महापुरुषवर्णनमिव सहृदयहृदयं गाढमा-लिङ्गति । विविधाः परस्परं संघर्षमापादिताः सामर्षे धनञ्जये धृतिभावमेवं पुष्टिपराकाष्ठां नयन्तो विभाव्यन्ते । अनयैव धृत्या संवलितो धनञ्जयस्य युद्धोत्साहो वीररसोन्मुखीभूतः स्वदते सहृदयेभ्यः ।

यद्यतीतस्य धनञ्जयवृत्तस्य कविप्रतिभया प्रत्यक्षायमाणतां मन्यमानाः सहृदया भाविकालङ्कारस्य योजनामत्रातिष्ठेयुस्तथात्वेऽपि वीररसप्रतीत्यभ्यु-द्गमे नाऽत्र कश्चिद् विरोधः । भारविगतो भाव आशयः श्रोतरि सहृदये प्रति-बिम्बरूपेण परिपतन् धनञ्जयस्य धर्मयुद्धवीररसनायकभावं निपुणं परि-पुष्णाति ।

चतुर्दशे सर्गे हरकिरातसेनापतिना समं धनञ्जयस्य सम्भाषायां नाना-विधा उच्चावचविषया व्यावर्णिताः । तत्राऽपि महाकवेर्भारवेः स्मृतिर् धनञ्जयं न जहाति । दृश्यतां श्लोकत्रयमधो लिखितम् । यत्र तपःपरिक्लि-ष्टोऽपि धनञ्जयः क्षात्रेण तेजसा परिवृद्धमन्युश्चित्रितः—

१. तदेव, १३.३८, ३९, ४१

२. तदेव, १४.१२

'पतत्सु शस्त्रेषु वितत्यरोदसी
समन्ततस्तस्य धनुर्दुधूषतः ।
सरोषमुल्केव पपात भीषणा
बलेषु दृष्टिर्विनिपातशंसिनी ॥

दिशः समूहन्निव विक्षिपन्निव
प्रभां रवेराकुलयन्निवानिलम् ।
मुनिश्चचाल क्षमकालदारुणः
क्षितिं सशैलां चलयन्निवेषुभिः ॥

शिवध्वजिन्यः प्रतियोधमग्रतः
स्फुरन्तमुग्रेषु मयूखमालिनम् ।
तमेकदेशस्थमनेकदेशगा
निदध्युरर्कं युगपत्प्रजा इव ॥'[1]

अत्राऽभिनन्दनीयोदयेन धनञ्जयेन साकं संसिद्धसाम्मनस्यानां सहृदयानां प्रमुदितभावनानामनुसन्धानवतां प्रह्लादातिशयः सत्वरं प्रवर्तते ।

पञ्चदशस्सर्गस्तु सर्गान्तरेभ्यो वैलक्षण्यलक्षण इव विरचितः प्रतिभाति । किं तत्र युद्धवीररसचिन्तयेति सचेतोभिर्न शङ्कनीयम् । भारवेर्हृदयं तत्राऽपि चिन्तातुरमेव ।

अत्र सर्गे विविधरूपाणि युद्धानि कल्पयितुं शक्यानि । शब्दैस्सह शब्दानाम्, अर्थैस्सहाऽर्थानाम्, वर्ण्यवस्तुभिस्सह वर्ण्यान्तरवस्तूनाम्, रसवर्णनाभिः सह चित्रकाव्यरचनानाम्; किं बहुना, भारवेः प्रकृतिमधुराभिर् गीर्भिः सह तत्समकालप्रचलितकाव्यगीःप्रवृत्तीनां विक्षुब्धसमवायः युद्धवपुष्क एव । तथात्वेऽपि धनञ्जये दत्तदृष्टिर्भारविः स्मरत्येव तस्य । नान्यथा निम्नाङ्कितेषु श्लोकेषु तस्य परामर्शः संभाव्यावसरः सिध्यति—

'अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः ।
भेजे दिशः परित्यक्तमहेष्वासा च सा चमूः ।

---

१. तदेव, १४, ४९, ५०, ५८

आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु ।
व्यक्तिमायाति महतां माहात्म्यमनुकम्पया ॥

अवद्यन्पत्रिणः शम्भोः सायकैरवसायकैः ।
पाण्डवः परिचक्राम शिक्षया रणशिक्षया ॥

पार्थबाणाः पशुपतेरावव्रुर्विशिखावलीम् ।
पयोमुच इवारन्ध्राः सावित्रीमंशुसंहतिम् ॥

स पिशङ्गजटावलिः किर–
–न्नुरुतेजः परमेण मन्युना ।
ज्वलितौषधिजातवेदसा
हिमशैलेन समं विदिद्युते ॥

सर्गेऽस्मिन्नुपर्युद्धृतश्लोकपञ्चकस्याऽभिप्रायस्वारस्यवेदिनां सहृदयानां विदितमेव यद् भारविणा नात्र सर्गे यमकादीनां दुष्करशब्दभङ्गादीनां रसाङ्गत्वेन निबन्धः कृतः। रसाक्षिप्ततया तन्निबन्धस्य तु कथैव दूरे। एकद्वयक्षरसमुद्गमगोमूत्रिकादिचित्रबन्धाः कथमत्र सन्निवेशिता इति प्रश्नसमाधानायाऽद्यत्वेऽपि मौनमालम्बमानः भारवियुगवर्तिकाव्यकर्मेतिहासः प्रष्टव्योऽन्वेष्टव्यश्च। एतत्तु निश्चितमेव यद्रसाक्षिप्ततया भारविणा न चित्रबन्ध आकांक्षितो न वा निष्पादितः। सचित्रबन्धेऽपि सर्गेऽत्रोपर्युक्ताः श्लोकाः प्रसन्नमधुरया वचनरचनया विरचिता महाकाव्याङ्गिभूतं धर्मयुद्धवीरं युक्त्या समाक्षिपन्त एव प्रतिभान्ति। षोडशः सर्गः पञ्चदशसर्गे चित्रबन्धतिरस्करिण्याऽतिरोहितां धनञ्जयस्य जयिनीं भुजवीर्यलक्ष्मीं जागरन्निव दृश्यते। प्रतिपक्षस्य हरकिरातस्य समरसंरम्भेण विवृद्धमन्योर्धनञ्जयस्य प्रतियुद्धोत्साहसंधुक्षणाय भारविणा वितर्कव्यभिचारिणी या योजना प्रथमश्लोक एव कृता सा पूर्वसर्गस्थचित्रबन्धप्रोञ्छनाय प्रभवति। दृश्यतां स श्लोकः—

---

१. तदेव, १५.१, ४, ३७, ३९, ४७

काव्यनिर्माणकौशलमेवाभिव्यनक्ति । अत्र सर्वे निम्ननिर्दिष्टा श्लोका दर्शनीयता-महंन्ति —

'अभिभवति मनः कदम्बवायौ
मदमधुरे च शिखण्डिनां निनादे।
जन इव न धृतेश्चचाल जिष्णु-
र्न हि महतां सुकरः समाधिभङ्गः ।

अलसपदमनोरमं प्रकृत्या
जितकलहंसवधूगति प्रयातम् ।
स्थितमुरुजघनस्थलाति-
भारादुदितपरिश्रम जिह्मतेक्षणं वां ।।

भृशकुसुमशरेषु पातमोहा—
दनवसितार्थपदाकुलोऽभिलाषः ।
अधिकविततलोचनं वधूना—
—मयुगपदुन्नमितभ्रु वीक्षितं च ।

रुचिकरमपि नार्थवद्बभूव
स्तिमितसमाधिशुचौ पृथातनूजे ।
ज्वलयति महतां मनांस्यमर्षे
न हि लभतेऽवसरं सुखाभिलाषः ।'[1]

उपर्युक्तं श्लोकचतुष्टयात्मकं काव्यं भावनया भावितं रतिपराजये पर्य-वस्यति । धनञ्जयस्यार्जुनस्य प्रशमवेदिता सारिष्ठेति भावोऽपि प्रकाश्यते । सर्वैरेव तैस्तै रागविवर्धनसाधकसंभारैर्भृशमधिक्षिप्तोऽपि धनञ्जयो निर्जित-सर्वसुखैषणः संयमशीलो धृतिमांश्च विराजते इति न विच्छिद्यते तद्हृदयेन सह सहृदयसामाजिकहृदयस्य साधारणीकृतिः । अतएव रसप्रवाहोऽपि महो-त्साहमहाभावनिष्पन्दो निर्विघ्नं प्रवहति । न क्वाऽपि तत्र रसापकर्षणमिव प्रतिभाति ।

---

१. तदेव, १०.२३,६०-६२

एकादशस्सर्गोऽनुष्टुब्वृत्तबद्धो देवेन्द्रागमन–देवेन्द्रधनञ्जयसंवादादि-वर्णनासंकुलो नायकं धनञ्जयं मुनिरूपधरमप्यप्रधृष्यबलवीर्यसारं प्रदर्शयति। धर्मयुद्धवीरस्याऽऽलम्बनभूतस्यार्ज्जुनस्य लोकोत्तरः शत्रुपराभवोत्साहो भावनया साक्षात्कारेणानुभवविषयीभूतः स्वदते सहृदयेभ्यः । केचनैतत्सर्गस्थाः श्लोकाः प्रमाणरूपेणाध उद्ध्रियन्ते—

'क्षत्रियस्तनयः पाण्डोरहं पार्थो धनञ्जयः ।
स्थितः प्रास्तस्य दायादैर्भ्रातुर्ज्येष्ठस्य शासने ।।

कृष्णद्वैपायनादेशाद् विभर्मि व्रतमीदृशम् ।
भृशमाराधने यत्तः स्वाराध्यस्य मरुत्वतः ।।

उदाहरणमाशीःषु प्रथमे ते मनस्विनाम् ।
शुष्केऽशनिरिवामर्शो यैररातिषु पात्यते ।।

न सुखं प्रार्थये नार्थमुदन्वद्वीचिचञ्चलम् ।
नाऽनित्यताशनेस्त्रस्यन् विविक्तं ब्रह्मणः पदम् ।।

वंशलक्ष्मीमनुद्धृत्य समुच्छेदेन विद्विषाम् ।
निर्वाणमपि मन्येऽहमन्तरायं जयश्रियः ।।

विच्छिन्नाभ्रविलायं वा विलीये नगमूर्धनि ।
आराध्य वा सहस्राक्षमयशः शल्यमुद्धरे ।।'[1]

सर्वोपि सहृदयलोक उपर्युद्धृतश्लोकवर्णितेन धनञ्जयेन नायकेन सह तादात्म्यं समरसीभावं वा स्थापयितुं समर्थः। एवं स्थिते धर्मयुद्धवीररस-स्याऽऽस्वादोऽयत्नोपनत एव तत्कृत इति कः संदेहः। अत्र भारविणा धन-ञ्जयोऽर्जुनस्तथाऽप्रतिवार्यवीर्यश्चित्रितो यथा सर्वेऽपि सहृदयास्तत्र प्रीतियोगं बिभ्रति । तत्समानहृदयत्वञ्च ,लभमानाः बलवीर्योत्साहसम्पत्समृद्धाश्च संजायन्त इति तु कैमुतिकन्यायत एव सिद्धम् ।

आगामी द्वादशः सर्गो धनञ्जयपरीक्षासर्गः। शिवाराधनाय तपोनि-रतस्य महावीरस्य धनञ्जयस्य वपुष्मत्ता बलवीर्यधैर्यशालिता च निम्ना-ङ्कितेषु श्लोकेषु स्पष्टं द्रष्टुं शक्यते—

---

१. तदेव, ११.४५, ४६, ६५, ६६, ६९, ७९

'वपुरिन्द्रियोपतपनेषु
सततमसुखेषु पाण्डवः ।
व्याप नगपतिरिव स्थिरतां
महतां हि धैर्यमविभाव्यवैभवम् ।।

'न विसिस्मिये न विषसाद्
मुहुरलसतां न चाददे ।
सत्त्वमुरुधृति रजस्तमसी
न हृतः स्म तस्य हतशक्तिपेलवे ।।'

'कवचं स बिभ्रदुपवीत—
पदनिहितसज्यकार्मुकः ।
शैलपतिरिव महेन्द्रधनुः-
परिवीतभीमगहनो विदिद्युते ।।'

तमुदीरितारुणजटांशु—
मधिगुणशरासनं जनाः ।
रुद्रमनुदितललाटदृशं
ददृशुर्मिमन्थिषुमिवासुरीः पुरीः ।।

'मरुतां पतिः स्विदहिमांशु-
रुत पृथुशिखः शिखी तपः ।
तप्तुमसुकरमुपक्रमते
न जनोऽयमित्यवयये स तापसैः ।।[1]

नाऽत्र सहृदयानुभवः शत्रुविजयोत्साहरूपं विषयं पराकृत्य विषयान्तरं गवेषयितुकामः । सहृदयैरनुभूयमानो वीरोत्साहः सुतरामानन्दायैव सञ्जायते तेषामिति तु सुनिश्चितमेव ।

शिवप्रसादनाय दुष्करे तपसि लग्नस्य धनञ्जयस्य लोकातिशायिनं महिमानं मुनिजनमुखेन वर्णयन् यदाह भारविर्निम्ननिर्दिष्टयोः श्लोकयोस्तेन नाय-

१. तदेव १२. ३, ५, ९, १४, १५

कस्य बलवीर्यपराक्रमपराभवः सागरवीचिमालासु सूर्यरश्मिच्छटाच्छुरणमिव बहुलीभवन् विलोक्यते—

चलनेऽवनिश्चलति तस्य
करणनियमे सदिङ्मुखम् ।
स्तम्भमनुभवति शान्तमरुद्—
—ग्रहतारकागणयुतं नभस्तलम् ।।

स तदोजसा विजितसार—
—ममरदितिजोपसंहितम् ।
विश्वमिदमपि दधाति पुरा
किमिवास्ति यन्न तपसामदुष्करम् ।।[1]

धनञ्जयसदृशस्य नायकस्य मनोभावेन शत्रुविजयोत्साहरूपेणैव भाव्यम् । अत्र सहृदया अपि धनञ्जयेन समानहृदयीक्रियमाणा महान्तमात्मानन्दमनुभवन्ति ।

शङ्करेण दृष्टो धनञ्जयो भारविणा सत्त्वोत्साहसम्पन्न एव वर्ण्यते येनाऽस्य धर्मयुद्धवीररसप्रबन्धनायकत्वं सुष्ठु निर्वहति । दृश्यतामयं श्लोकः—

'तपसा निपीडितस्य कृशस्य
विरहितसहायसम्पदः ।
सत्त्वविहितमतुलं भुजयो-
र्बलमस्य पश्यत मृधेऽधिकुप्यतः ।[2]

त्रयोदशे सर्गे समरायेव समाजुहूषमाणस्य धनपोत्रविदीर्णशालमूलस्य निविडस्कन्धनिकापरुग्णवप्रस्य महाजवस्य महावराहस्य धनञ्जयस्य च नायकस्य परस्परं बलवीर्याकलनं वर्ण्यते भारविणा । भारविर्वर्णितमेतादृशं नायकं धनञ्जयं मनोनयनाञ्जलिभिः पायं पायं कस्य न नाम सहृदयस्य बलवीर्योद्रेकोत्फुल्लहृदयता संपद्येत । एवम्भूते च हृदयाध्माने युद्धवीरस्य रसस्य कयाचिद् व्यपेक्षया भवत्येव समाक्षेपः । आपातिकानुभवो वेति मन्तव्यं सुधीभिर्विचारपूर्वकम् ।

---

१. तदेव, १२.२८, २९

२. तदेव १२.३९

अत्र सर्गे श्लोकेनैकेन निम्ननिर्दिष्टेन वर्णितो धनञ्जयो नायको वीर-रसस्याऽऽधिदैवतमिवावभासते सहृदयजनहृदयदर्पणेषु—

'प्रविकर्षनिनादभिन्नरन्ध्रः
पदविष्टम्भनिपीडितस्तदानीम् ।
अधिरोहति गाण्डिवं महेषौ
सकलः संशयमारुरोह शैलः ।।'[1]

एतादृशं वीररसस्याऽऽधिदैवतं मनसा कल्पयन्तः सहृदयाः कथं न नाम वीररसास्वादचमत्काराय स्पृहयेयुः ।

उपर्युद्धृताच्छ्लोकादग्रे स्थिते निम्नाङ्कितें श्लोके शिवमपश्यतः शिवेन च दृष्टस्य धनञ्जयस्य नायकस्य वीररसाऽऽधिदैवतभावः सुतरां परिपुष्यतिः—

'ददृशेऽथ सविस्मयं शिवेन
स्थिरपूर्णायतचापमण्डलस्थः ।
रचितस्तिसृणां पुरां विधातुं
वधमात्मेव भयानकः परेषाम् ।।'[2]

हरकिरातपृतनापतिना वनेचरेन्द्रेण दृष्टः संभाषितश्च धनञ्जयोऽर्जुनो भारविणा महता मनःसंरम्भेण वर्ण्यते निम्नोल्लिखिते श्लोकत्रये—

'दीपितस्त्वमनुभावसंपदा
गौरवेण लघयन् महीभृतः ।
राजसे मुनिरपीह कारयन्
आधिपत्यमिव शातमन्यवम् ।।

तापसोऽपि विभुतामुपेयिवान्
आस्पदं त्वमसि सर्वसम्पदाम् ।
दृश्यते हि भवतो विना जनै-
रन्वितस्य सचिवैरिव द्युतिः ।।

१. तदेव, १३. १६
२. तदेव, १३. १७

ह्लेपयन्नहिमतेजसं त्विषा
स त्वमित्थमुपपन्नपौरुषः ।
हर्तुमर्हसि वराहभेदिनं
नैनमस्मदधिपस्य सायकम् ॥[१]

एवं वर्णितो धनञ्जयो नायको वनेचरस्याऽधिक्षेपवचनं नार्हति । किन्तु चतुर्दशसर्गस्थे मौल एव श्लोके वनचराऽधिक्षिप्तस्य विविधविरुद्ध-मनोभावसंरम्भेण प्रकथितस्य तस्य धैर्यादिसत्त्वगुणसम्पत्सुतरामुल्लास्यते महाकविना —

ततः किरातस्य वचोभिरुद्धतैः
पराहतः शैल इवार्णवाम्बुभिः ।
जहौ न धैर्यं कुपितोऽपि पाण्डवः
सुदुर्ग्रहान्तःकरणा हि साधवः ॥

क्रोधसंरब्धस्याऽपि प्रशान्तसंरम्भस्याऽर्जुनस्यैतादृशं वर्णनं कस्यचन लोका-तिशायिवीर्यपराक्रमस्य महात्मनो महापुरुषवर्णनमिव सहृदयहृदयं गाढमा-लिङ्गति । विविधाः परस्परं संघर्षमापादिताः सामर्षे धनञ्जये धृतिभावमेवं पुष्टिपराकाष्ठां नयन्तो विभाव्यन्ते । अनयैव धृत्या संवलितो धनञ्जयस्य युद्धोत्साहो वीररसोन्मुखीभूतः स्वदते सहृदयेभ्यः ।

यद्यतीतस्य धनञ्जयवृत्तस्य कविप्रतिभया प्रत्यक्षायमाणतां मन्यमानाः सहृदया भाविकालङ्कारस्य योजनामत्रातिष्ठेयुस्तथात्वेऽपि वीररसप्रतीत्यभ्यु-द्गमे नाऽत्र कश्चिद् विरोधः । भारविगतो भाव आशयः श्रोतरि सहृदये प्रति-बिम्बरूपेण परिपतन् धनञ्जयस्य धर्मयुद्धवीररसनायकभावं निपुणं परि-पुष्णाति ।

चतुर्दशे सर्गे हरकिरातसेनापतिना समं धनञ्जयस्य सम्भाषायां नाना-विधा उच्चावचविषया व्यावर्णिताः । तत्राऽपि महाकवेर्भारवेः स्मृतिर् धनञ्जयं न जहाति । दृश्यतां श्लोकत्रयमधो लिखितम् । यत्र तपःपरिक्लि-ष्टोऽपि धनञ्जयः क्षात्त्रेण तेजसा परिवृद्धमन्युश्चित्रितः—

१. तदेव, १३.३८, ३९, ४१
२. तदेव, १४.१२

'पतत्सु शस्त्रेषु वितत्य रोदसी
समन्ततस्तस्य धनुर्दुधूषतः ।
सरोषमुल्केव पपात भीषणा
बलेषु दृष्टिर्विनिपातशंसिनी ॥

दिशः समूहन्निव विक्षिपन्निव
प्रभां रवेराकुलयन्निवानिलम् ।
मुनिश्चचाल क्षमकालदारुणः
क्षितिं सशैलां चलयन्निवेषुभिः ॥

शिवध्वजिन्यः प्रतियोधमग्रतः
स्फुरन्तमुग्रेषु मयूखमालिनम् ।
तमेकदेशस्थमनेकदेशगा
निदध्युरर्कं युगपत्प्रजा इव ॥'[1]

अत्राऽभिनन्दनीयोदयेन धनञ्जयेन साकं संसिद्धसाम्मनस्यानां सहृदयानां प्रमुदितभावनानामनुसन्धानवतां प्रह्लादातिशयः सत्वरं प्रवर्तते ।

पञ्चदशस्सर्गस्तु सर्गान्तरेभ्यो वैलक्षण्यलक्षण इव विरचितः प्रतिभाति । किं तत्र युद्धवीररसचिन्तयेति सचेतोभिर्न शङ्कनीयम् । भारवेर्हृदयं तत्राऽपि चिन्तातुरमेव ।

अत्र सर्गे विविधरूपाणि युद्धानि कल्पयितुं शक्यानि । शब्दैस्सह शब्दानाम्, अर्थैस्सहाऽर्थानाम्, वर्ण्यवस्तुभिस्सह वर्ण्यान्तरवस्तूनाम्, रसवर्णनाभिः सह चित्रकाव्यरचनानाम्; किं बहुना, भारवेः प्रकृतिमधुराभिर् गीर्भिः सह तत्समकालप्रचलितकाव्यगीःप्रवृत्तीनां विक्षुब्धसमवायः युद्धवपुष्क एव । तथात्वेऽपि धनञ्जये दत्तदृष्टिर्भारविः स्मरत्येव तस्य । नान्यथा निम्नाङ्कितेषु श्लोकेषु तस्य परामर्शः संभाव्यावसरः सिध्यति—

'अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः ।
भेजे दिशः परित्यक्तमहेष्वासा च सा चमूः ।

---

१. तदेव, १४, ४९, ५०, ५८

आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु ।
व्यक्तिमायाति महतां माहात्म्यमनुकम्पया ॥

अवद्यन्पत्रिणः शम्भोः सायकैरवसायकैः ।
पाण्डवः परिचक्राम शिक्षया रणशिक्षया ॥

पार्थबाणाः पशुपतेरावव्रुर्विशिखावलीम् ।
पयोमुच इवारन्ध्राः सावित्रीमंशुसंहतिम् ॥

स पिशङ्गजटावलिः किर–
–न्नुरुतेजः परमेण मन्युना ।
ज्वलितौषधिजातवेदसा
हिमशैलेन समं विदिद्युते ॥

सर्गेऽस्मिन्नुपर्युद्धृतश्लोकपञ्चकस्याऽभिप्रायस्वारस्यवेदिनां सहृदयानां विदितमेव यद् भारविणा नाऽत्र सर्गे यमकादीनां दुष्करशब्दभङ्गादीनां रसाङ्गत्वेन निबन्धः कृतः। रसाक्षिप्ततया तन्निबन्धस्य तु कथैव दूरे। एकद्व्यक्षरसमुद्गमगोमूत्रिकादिचित्रबन्धाः कथमत्र सन्निवेशिता इति प्रश्नसमाधानायाऽद्यत्वेऽपि मौनमालम्बमानः भारवियुगवर्तिकाव्यकर्मेतिहासः प्रष्टव्योऽन्वेष्टव्यश्च। एतत्तु निश्चितमेव यद्रसाक्षिप्ततया भारविणा न चित्रबन्ध आकांक्षितो न वा निष्पादितः। स चित्रबन्धेऽपि सर्गेऽत्रोपर्युक्ताः श्लोकाः प्रसन्नमधुरया वचनरचनया विरचिता महाकाव्याङ्गिभूतं धर्मयुद्धवीरं युक्त्या समाक्षिपन्त एव प्रतिभान्ति। षोडशः सर्गः पञ्चदशसर्गे चित्रबन्धतिरस्करिण्याऽतिरोहितां धनञ्जयस्य जयिनीं भुजवीर्यलक्ष्मीं जागरन्निव दृश्यते। प्रतिपक्षस्य हरकिरातस्य समरसंरम्भेण विवृद्धमन्योर्धनञ्जयस्य प्रतियुद्धोत्साहसंधुक्षणाय भारविणा वितर्कव्यभिचारिणी या योजना प्रथमश्लोक एव कृता सा पूर्वसर्गस्थचित्रबन्धप्रोञ्छनाय प्रभवति। दृश्यतां स श्लोकः—

---

१. तदेव, १५.१, ४, ३७, ३९, ४७

'ततः किराताधिपतेरलघ्वी—
माजिक्रियां वीक्ष्य विवृद्धमन्युः ।
स तर्कयामास विविक्ततर्क—
श्चिरं विचिन्वन्निति कारणानि ।'[1]

अयं खलु वितर्कः स्मृत्या संवलनामवाप्तो धनञ्जयस्य स्मृतिसमुद्बोधनमाचरति । नाऽऽन्यथा भारविर् निम्नाङ्किते स्वप्रकृतिमाधुर्येण मधुरशब्दार्थरचनाशालिनि श्लोकचतुष्टये सकलायोधनसम्भाराडम्बरवर्णनासु प्रवर्तेत:—

मदस्रुतिश्यामितगण्डलेखाः
क्रामन्ति विक्रान्तनराधिरूढाः ।
सहिष्णवो नेह युधामभिज्ञा
नागा नगोच्छ्रायमिवाक्षिपन्तः ॥

विचित्रया चित्रतयेव भिन्नां
रुचं रवेः केतनरत्नभासा ।
महारथौघेन न संनिरुद्धा
पयोदमन्दध्वनिना धरित्री ॥

समुल्लसत्प्रासमहोर्मिमालं
परिस्फुरच्चामरफेनपंक्ति ।
विभिन्नमर्यादमिहातनोति
नाश्वीयमाशा जलधेरिवारम्भः ॥

हताहतेत्युद्धतभीमघोषैः
समुज्झिता योद्धृभिरभ्यमित्रम् ।
न हेतयः प्राप्ततडित्त्विषः खे
विवस्वदंशुज्ज्वलिताः पतन्ति ॥

१. तदेव, १६-१
२. तदेव, १६.२-५

वितर्कोऽयं न चिरं स्वात्मनि तिष्ठति किन्तु धनञ्जयस्य स्मृतिमुद्बोधयति स्वयं चोपसरति। एषूपर्युट्टङ्कितेषु श्लोकेषु महाकविर्भारविर्यदनुभूतपूर्वाऽनेकसमरसंरम्भडम्बरस्य धनञ्जयस्य हस्त्यश्वरथपादातप्रविभागायाः चतुरङ्गिण्याः सेनायाः स्मृतिं निरूपयति तद्वस्तुतः युद्धवीरस्योद्दीपनविभावयोजनामेव करोति। एषा विभावयोजना न कथाशरीरकामनीयकनिष्पत्तौ पर्यवस्यति, किन्तु महाकाव्यस्याऽङ्गिनो युद्धवीरस्य रसस्य चर्वणाचमत्कारोदये।

धनञ्जयस्य स्मृतिपटले पूर्वानुभूतायोधनवासनानां परस्परं सम्मर्दमिव चित्रयन् यदाह भारविर्निम्नलिखिते श्लोककाव्ये ततोऽपि लोकोत्तरवीरभावोऽभिव्यज्यते —

'उज्झत्सु संहार इवास्तसंख्य—
—मह्नाय तेजस्विषु जीवितानि।
लोकत्रयास्वादनलोलजिह्वं
न व्याददात्याननमत्र मृत्युः ॥'[1]

सर्गान्ते च रचितोऽयं श्लोकः वीरस्य धनञ्जयस्य विजयिनीं मनःस्थितिं दृढयति यत्र सहृदयानामानन्दातिरेकोऽवश्यंभावी—

'वीतप्रभावतनुरप्यतनुप्रभावः
प्रत्याचकांक्ष जयिनीं भुजवीर्यलक्ष्मीम्।
अस्त्रेषु भूतपतिनपह्नुतेषु जिष्णु—
र्वर्षिष्यता दिनकृतेव जलेषु लोकः ॥'[2]

धर्मयुद्धवीरस्य धनञ्जयस्य स्वपुरुषकारे यो महाविश्वासस्ततस्तेन साधारणीकृतहृदयाः सहृदया भारविणा समर्पितं काव्येषु लोकेषु च दुर्लभं युद्धोत्साहानन्दं रसयन्त्येवात्र।

सप्तदशः सर्गः यथा निम्नलिखिते श्लोकद्वये दृश्यते, धनञ्जयपुरुषकारमुपजीव्य किमपि कमनीयं काव्यमिव प्रतिभाति—

---

१. तदेव, १६.१६
२. तदेव, १६.६४

'अथापदामुद्धरणक्षमेषु
मित्रेष्विवाऽस्त्रेषु तिरोहितेषु ।
धृतिं गुरुश्रीर्गुरुणाऽभिपुष्यन्
स्वपौरुषेणेव शरासनेन ॥

भूयः समाधानविवृद्धतेजा
नैवं पुरा युद्धमिति व्यथावान् ।
स निर्ववामास्त्रममर्षनुन्नं
विषं महानाग इवेक्षणाभ्याम् ॥[1]

आत्मीयं पुरुषकारमेवावलम्ब्य हरकिरातं योद्धुं संरब्धस्य धनञ्जयस्याऽमर्षः सहृदयानपि सामर्षान् कर्तुं समर्थः । अग्रेऽमर्षिणस्तस्य याश्चेष्टाश्चित्रितास्तत्र भ्रूभङ्गस्य चित्रेण युद्धवीरावतारस्य नितरामुपकरोति—

'क्रोधान्धकारान्तरितो रणाय
भ्रूभेदरेखाः स बभार तिस्रः ।
घनोपरुद्धः प्रभवाय वृष्टे—
रूर्ध्वांशुराजीरिव तिग्मरश्मिः ॥[2]

अष्टादशः सर्गः काव्यसमापनसर्गः एतर्हि सर्गे सर्गान्तरेषु कृतानां वस्तुनेतृरसवर्णनानां स्वभावसुलभ उपसंहारः परिलक्ष्यते । दृश्यतां सर्गस्याऽस्य प्रथम एव श्लोको यत्र भारविणा धनञ्जयस्याऽर्जुनस्य स्मृतौ पूर्वायोधनवासनतां सम्मर्दमिव वर्णयता तस्य धर्मयुद्धवीरभाव आनुषङ्गिकैर्भावान्तरैस्संवलितः परामृष्टः प्रकाशितश्चः—

तत उदग्र इव द्विरदे मुनौ
रणमुपेयुषि भीमभुजायुधे ।
धनुरपास्य सबाणधि शङ्करः
प्रतिजघान घनैरिव मुष्टिभिः ॥[3]

---

१. तदेव, १७.१, ७
२. तदेव, १७.९
३. तदेव, १८.१

अत्र नायकप्रतिनायकयोर्धर्मयुद्धमेव न वर्णितं किन्तु तयोरलौकिको वीर-भावोऽपि निभृतं प्राकाश्यं नीतः ।

एतदग्रयायिनि श्लोककाव्ये महावीरयोः समानशीलव्यसनयोर्धनञ्जय-हरकिरातयोः त्रिभुवनैकवीरभावो स्पष्टं व्यक्तीभवति सुखयति च सहृदयान् भारविकाव्यरसिकान् :—

'हरपृथासुतयोर्ध्वनिरुत्पत-
न्नमृदुसंवलिताऽङ्गुलिपाणिजः ।
स्फुटदनल्पशिलारवदारुणः
प्रतिननाद दरीषु दरीभृतः ॥'[1]

अत्र द्वयोर्विजयौत्सुक्यं सहृदयानप्युत्सुकीकरोति । अग्रे किं भावीति हृदयौत्सुक्येन समावर्जिताः सहृदयसामाजिका एतन्महाकाव्यार्थं भावयितुं सन्नद्धाः क्रियन्ते । प्रतिनायकस्य मारकशक्तिमतिशयानं नायकस्य सहनशक्ति-स्थैर्यमिति रमणीयो भावो निम्नाङ्किते श्लोके व्यज्यते । यस्य वीररसनिष्पादने-ऽन्तरङ्गत्वं निर्विवादम्—

'शिवभुजाहतिभिन्नपृथुक्षतीः
सुखमिवानुबभूव कपिध्वजः ।
क इव नाम बृहन्मनसां भवे—
दनुकृतेरपि सत्त्ववतां क्षमः ॥'[2]

नायकेन प्रतिनायकस्याऽपि सहनशक्तिसाम्यप्रकाशनं विना नायकस्य वीरभावप्रकाशनमनौचित्यावहं माभूदिति मत्वाऽग्रिमे श्लोके प्रतिनायकस्य दृढा सहनशक्तिराविष्क्रियते—

'व्रणमुखच्युतशोणितशीकर—
स्थगितशैलतटाभभुजान्तरः ।
अभिनवौषसरागभृता बभौ
जलधरेण समानमुमापतिः ॥'[3]

---

१. तदेव, १८.२

२. तदेव, १८.३

३. तदेव, १८.४

अत्र मात्रयोत्कन्धरो बीभत्सभावो धर्मयुद्धवीररसप्रकर्षं द्योतयितुमेव सन्निवेशित इति प्रतिभाति ।

निम्नाङ्कितयोः श्लोकयोः धनञ्जयस्य नायकस्य हृदये प्रतिनायकबल-वीर्याधिक्येन त्रासस्य प्रवेशः तत्र भावमतिक्रम्य मन्युभावस्य वैद्युतः संचारो भावनया भाव्यमानः सहृदयचेतश्चमत्कारे पर्यवस्यतिः—

'निपतितेऽधिशिरोधरमायते
समभरत्नियुगेऽयुगचक्षुषः ।
त्रिचतुरेषु पदेषु किरीटिना
लुलितदृष्टि मदादिव चस्खले ॥

'अभिभवोदितमन्युविदीपितः
समभिसृत्य भृशं जवमोजसा ।
भुजयुगेन विभज्य समाददे
शशिकलाभरणस्य भुजद्वयम् ॥[1]

धनञ्जयस्य लोकातिगं शौर्यवीर्यं प्रत्यक्षीकुर्वतो हरकिरातस्य निम्नाङ्किते श्लोके यच्चित्रणं तत्तु न स्वात्मनि तिष्ठति किन्तु धनञ्जयाऽऽलम्बनं धर्मयुद्धवीररसभावावेशं समुद्दीप्य विरमति—

'वियति वेगपरिप्लुतमन्तरा
समभिसृत्य रयेण कपिध्वजः ।
चरणयोश्चरणानमितक्षिति—
र्निजगृहे तिसृणां जयिनं पुराम् ॥[2]

धनञ्जयहरकिरातयोर्द्वन्द्वयुद्धं समुपसंहरता भारविणा नायकस्य वीर्योत्कर्षो नितरां नवयैव विचित्रया विधया निम्ननिर्दिष्टयोः श्लोकयोर्विभावितः—

---

१. तदेव, १८.६, ७
२. तदेव, १८.१२

'विस्मितः सपदि तेन कर्मणा
कर्मणां क्षयकरः परः पुमान् ।
क्षेप्तुकाममवनौ तमक्लमं
निष्पिपेष परिरभ्य वक्षसा ॥

तपसा तथा न मुदमस्य ययौ
भगवान् यथा विपुलसत्त्वतया ॥
गुणसंहृतेः समतिरिक्तमहो
निजमेव सत्त्वमुपकारि सताम् ॥'[1]

धनञ्जयस्य नायकस्य क्षोभः शाम्यति, आक्रोशोऽस्तं भाति, मनः प्रसीदति, बलवीर्योत्साहभावो भगवदनुग्रहैककारणः प्रतिभाति । सदयः सर्वं दृश्यं विपरिवर्तमानं दृश्यते । मायाकिरातस्य निर्गतमात्रं शाङ्करं रूपं संपश्यतस्तस्य हृदयाद् भगवद्भक्तिरसप्रवाहो निस्सरति । दृश्यतामधोनिर्दिष्टयोश्श्लोकयोरतर्कितोपनतं परिवर्तनमिदम्--

'शरणं भवन्तमतिकारुणिकं
भवभक्तिगम्यमधिगम्य जनः ।
जितमृत्यवोऽजित भवन्ति भये
ससुराऽसुरस्य जगतः शरणम् ॥

'विपदेति तावदवसादकरी
न च कामसम्पदभिकामयते ।
न नमन्ति चैकपुरुषं पुरुषा—
स्तव यावदीश न नतिः क्रियते ॥'[2]

एतयोः श्लोकयोर्धनञ्जयेन नायकेन मायाप्रतिनायकस्य महादेवशङ्करस्य फलज्यायसी स्तुतिर्ध्वनति यस्याऽनुध्वनिर्धनञ्जयस्य भक्तिभाविता भगवच्छरणागतिस्सहृदय-हृदयानि परिपावयति । इत्थं वीररसात्मकमिदं महाकाव्यं भगवच्छरणव्रज्यैव महाशक्तिरिति तत्त्वज्ञानोपदेशे विरमति ।

---

१. तदेव, १८.१३,१४

२. तदेव, १८.२२,२३

महाकाव्यस्याऽस्याऽऽरम्भो यथा शुभोदयो रसावहश्च तथैव पर्यवसानमपि शुभोदर्कं रसावहमेव सञ्जातम् ।

किमेतादृशं नानारसभावैर्भरितं वीररसाऽन्तरङ्गं वीररसानन्दनिर्भरं काव्यं संस्कृते भाषान्तरे वा निबद्धं न वेति न निश्चेतुं शक्यम् । धनञ्जयहरकिरातयोरायोधनमिवायोधनं कुत्रापि वर्णितं च दृश्यते । अत्र 'भारविर्भारविरिवेत्येव मन्तुं शक्यते । शिशुपालवधे माघमहाकविना श्रीकृष्णशिशुपालयोर्युद्धानि पार्यन्तिकसर्गे विशदं वर्णितानि किन्तु यादृशो युद्धानाः किरातार्जुनीये वर्णितः तादृशस्तत्र नोपलभ्यते । सम्भवतः काव्यान्तरेषु क्वापि नोपलभ्यते । अन्तमङ्गलश्लोकः किरातार्जुनीयस्य सर्वोपसंहारक उद्ध्रियते यतो हि महाकाव्ये यदपि वृत्तं तत्सर्वं तत्र प्रतिभातमिव प्रतीयते—

'व्रज जय रिपुलोकं पादपद्मानतः सन्
गदित इति शिवेन श्लाघितो देवसंघैः ।
निजगृहमथ गत्वा सादरं पाण्डुपुत्रो
धृतगुरुजयलक्ष्मीर्धर्मसूनुं ननाम ॥'[1]

अलमतिविस्तरेण । एतत्तु कयाचन व्यपेक्षया सिद्धमेव यद् वस्तु–नेतृ–रसभावनायां, वस्तु–नेतृ–रसवर्णनायाञ्च निःसामान्यं निरनुकरं च महाकवेर्भारवेर्वीरकाव्यम् ।

रसयन्तु सहृदया वीरं रसं धनञ्जयचरितनिःसृतम्; वृण्वन्तु स्वात्मदेवस्वरूपभगवच्छरणम्; सफलीकुर्वन्तु च सत्काव्यास्वादाभिलषितानि । स्वकाव्यसंसारे प्रजापतिर्भारविरिति निर्विचिकित्सम् । अद्यत्वे खलु भारते कविभिर्भारविरेवानुसर्त्तव्योऽनुकर्तव्यश्च । किरातार्जुनीयसदृशानां काव्यानामद्यत्वे काचन महोपयोगितेति सर्वान् ध्वनीनुपसंहरन् निःसरति महाध्वनिरयमित्यत्र सहृदयसंवेदनमेव प्रमाणम् ।

—०—

१. तदेव, १८.४८

# प्रकृतिमधुरा भारविगिरः

महाकवेर्भारवेः प्रचुरप्रचारासु काव्यप्रशंसनासु 'प्रकृतिमधुरा भारविगिरः' इत्यस्ति प्राचां भारविकाव्यरसिकानां नामतोऽविज्ञातानां प्रशंसना काचित् । प्रशंसनेयं महाकवेर्भारवेः पदनिवेशादारभ्य रसवर्णनापर्यन्तं सर्वं कविकर्म क्रोडीकरोति । किं नाम मधुरत्वम् ? किं नाम च प्रकृति-मधुरत्वं माधुर्यं वा पदरचनागुण इति काव्यालङ्कारसूत्रकारैर्वामनभट्टैरेवं सिद्धान्तितम्—

'ओजः-प्रसाद-श्लेष–समता-समाधि–माधुर्य–सौकुमार्योदारताऽर्थ—व्यक्ति-कान्तयो बन्धगुणाः'[1] इति । अत्र गुणदशके माधुर्यं नाम गुणः 'पृथक्पदत्वं माधुर्यम्'[2] इतिरूपः । तदुदाहरणं यथा कालिदासस्य कविकुलगुरोः कुमार-सम्भवस्य मौल एव निम्नोद्धृतः श्लोकः—

'अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य
स्थितः पृथव्या इव मानदण्डः ॥'[3]

---

१. काव्यालङ्कारसूत्रम्, ३. १. ४

२. तदेव, ३. १. २१

३. कुमारसम्भवम्, १. १

तद्विपर्ययोदाहरणं च वामनविरचितकाव्यालङ्कारसूत्रस्य वृत्तिकारेण श्रीगोपेन्द्रत्रिपुरहरभूपालेन निम्नाङ्कितं श्लोकार्धरूपं दत्तम्---

'चलितशबरसेनादत्तगोभृङ्गचण्ड –
ध्वनिचरितवराहव्याकुला विन्ध्यपादाः'[1] ।, इति ।।

माधुर्यमधिकृत्य :—

'बन्धे पृथक्पदत्वं च माधुर्यमुदितं बुधैः ।
अनेन हि पदन्यासाः काम धारामधुच्युताः ।।',[2] इति

एतन्माधुर्यं पदबन्धस्यैव गुणरूपं वैशिष्ट्यम् । माधुर्यमर्थगुणरूपमप्युदितं वामनभट्टेन 'उक्तिवैचित्र्यं माधुर्यम्'[3] इति ब्रुवता । शब्दगुणरूपं माधुर्यं समासदैर्घ्यनिवृत्तिपरम्; अर्थगुणरूपञ्च माधुर्यं प्रकर्षप्रतिपादनाय वर्ण्यमानस्याऽर्थस्य भङ्ग्यन्तरेणाभिधानमिति । शब्दार्थयोर्माधुर्यं स्फुटमधुरबन्धरूपमिति निध्यायता काव्यमीमांसाकारेण कविराजराजशेखरेण स्वकीयः काव्यपाकसिद्धान्तः प्रवर्तित इति प्रतिभाति । नवविधेषु काव्यपाकेषु 'नारिकेलपाक' इत्येकः पाकप्रकारः । एवं निष्कम्पः परिवृत्तिविधुरः पदसन्निवेशः 'पाक'-शब्देन व्यवह्रियते काव्यशास्त्रकारैः । अतएव राजशेखरस्य वाचोयुक्तिः—

'सति वक्तरि सत्यर्थे शब्दे सति रसे सति ।
अस्ति तन्न विना येन परिस्रवति वाङ्मधु ।।इति।।

तत्र, 'आद्यन्तयोः स्वादु नारिकेलपाकम्' इति साधूक्तं राजशेखरकविराजेन । कविराजराजशेखरस्य 'नारिकेलपाक'-सिद्धान्तं मनसिकृत्य किरातमहाकाव्यस्य घण्टापथाख्यटीकां विरचयता कोलाचल-मल्लिनाथसूरिणा युक्तियुक्तमुपक्रान्तम्—

---

१. काव्यालङ्कारसूत्रवृत्तिः, ३. १. २१
२. काव्यालङ्कार सूत्रवृत्तिः ३. १. २५
३. काव्यालङ्कारसूत्रम्, ३. २. ११

नारिकेलफलसम्मितवचो
भारवेः सपदि तद् विभज्यते ।
स्वादयन्तु रसगर्भनिर्भरं
सारमस्य रसिका यथेप्सितम् ॥[१]

महामहोपाध्यायकोलाचलमल्लिनाथस्य य उपर्युक्त उपक्रमस्ततोऽपि वस्तुतो भारवेर्गिरां प्रकृतिमाधुर्यमेवोपोद्वल्येत नाहार्यमाधुर्यम् । अत्र तात्पर्यमिदमेव यद् भारवेः काव्यं निसर्गत एव शब्दसौन्दर्यसम्पन्नं गम्भीरार्थभरनिर्भरञ्च निष्पद्यते । भारविणापि प्रसङ्गान्तरेण स्वकाव्यस्य प्रकृतिमधुरत्वं वैशिष्ट्यं निरूपितम् । निम्नोद्धृताः श्लोका अत्र प्रमाणतया द्रष्टव्यतामर्हन्ति—

'प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम् ।
साकाङ्क्षमनुपस्कारं विष्वग्गति निराकुलम् ॥
न्यायनिर्णीतसारत्वान्निरपेक्षमिवागमे ।
अप्रकम्प्यतयान्येषामाम्नायवचनोपमम् ॥
अलङ्घ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम् ।
औदार्यादर्थसम्पत्तेः शान्तं चित्तमृषेरिव ॥ ,'

अर्थात् किरातार्जुनीयं नाम महाकाव्यं प्रसन्नपदबन्धबन्धुरं महार्थभरसम्भृतं निर्विस्तरं निराकुलं निष्प्रकम्प्यपदतया वेदवाक्यप्रतिमं परानन्दप्रदत्वाच्च कस्यचिद् ऋषेः शान्तं चित्तमिव प्रशमापादकमिति वस्तुतः स्वकाव्यकर्मणि नितरां रसभावसमाहितचेतसा भारविणा स्वकाव्यस्य प्रकृतिमधुत्वं भूयोऽपि प्रकारान्तरेण प्रकाशितम् । दृश्यतां निम्नाङ्कितं श्लोकत्रयम्—

'विविक्तवर्णाभरणा सुखश्रुतिः
प्रसादयन्ती हृदयान्यपि द्विषाम् ।
प्रवर्तते नाकृतपुण्यकर्मणां
प्रसन्नगम्भीरपदा सरस्वती ॥

---

१. घण्टापथः, १. ६
२. किरात०, ११.३८–४०

भवन्ति ते सभ्यतमा विपश्चितां
मनोगतं वाचि निवेशयन्ति ये ।
नयन्ति तेष्वप्युपपन्ननैपुणा
गभीरमर्थं कतिचित् प्रकाशताम् ॥

स्तुवन्ति गुर्वीमभिधेयसम्पदं
विशुद्धिमुक्तेरपरे विपश्चितः ।
इति स्थितायां प्रतिपूरुषं रुचौ
सुदुर्लभाः सर्वमनोरमा गिरः ॥[1]

अर्थात् केचन शब्दसौष्ठवप्रिया भवन्ति काव्यरसिकाः केचन च गभीरार्थरुचयः । अत एव सर्वेषां शब्दरुचीनामर्थरुचीनाञ्च काव्यानुरागिणां कृते सर्वमनोरमा गिरः सुदुर्लभा एव । किन्तु किरातकाव्यरूपा गिरः सर्वमनोरमा विविक्तवर्णपदबन्धसौन्दर्यात्, श्रव्यतासम्पत्सम्भृतत्वात्, निगूढार्थप्रकाशनपरत्वात् दुर्विवेचकानामपि मनःप्रसत्तिप्रदायकत्वाच्चेति । अतएव किरातकाव्यरूपा गिरो न केवलं मधुराः किन्तु प्रकृतिमधुराः, तत्कर्तुर्भारवेः कृतपुण्यकर्मत्वात् लब्धसरस्वतीवरप्रसादत्वाद्वेति भावः ।

किरातार्जुनीयं महाकाव्यं खलु 'श्रियः कुरूणामधिपस्य'[2] इत्यादि श्लोकतः प्रारभ्यते । 'व्रज जय रिपुलोक'[3]—मित्यादि श्लोकतश्च समाप्तिमेति । आद्यन्तयोः श्लोकयोर्मध्ये सहस्राधिकाः श्लोकाः स्वमहिम्नि स्थिता विभ्राजन्ते । सर्वत्र माधुर्यमेव विविधाभिर्विच्छित्तिभिः श्रुतिपथमायाति, सहृदयहृदयानि च व्यश्नुमानमिव प्रतिभाति । एतन्माधुर्यं न प्रयत्नान्तरनिर्वर्त्यं प्रतीयते किन्तु साहजिकम् । अत्रैवं प्रतिपत्तव्यं यद् या खलु कविप्रतिभा रसात्मकं तत्तदभावनिर्भरञ्च काव्यमाविर्भावयति सैव तदन्तर्वर्ति तदपृथक्सिद्धं माधुर्यमप्याविष्करोति । आहार्यसाहजिकमाधुर्ययोरभेदो दृष्टान्तत एवावगन्तुं शक्यः । दृश्यतां शिशुपालवधमहाकाव्यकर्तुर्महाकवेर्माघस्याऽध उद्धृतः श्लोकः—

---

१. तदेव, १४.३-५
२. तदेव, १.१
३. तदेव, १८.४८

'मधुरया मधुवोधितमाधवी–
मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मद–
—ध्वनिभृता निभृताक्षरमुज्जगे ॥,'[1]

श्लोकोऽयं श्रुतिमधुरः सर्वस्य जनस्य श्रुतिसुखं प्रददाति । 'मधुर' इति शब्दे मकारधकारयोर्वर्णयोर्या सुश्रव्यता तामेव शतगुणीकर्तुं माघ-महाकविना श्लोकोऽयं व्यरचि । मकारधकारबहुलैर्वर्णैः परिपूरितानां परस्परमाकांक्षिणां पदानां बन्धो न मधुर इति न । किन्त्वेतन्माधुर्यं श्रुतिस्पर्शि न हृदयस्पर्शि सहृदयानाम्, यतोहि श्लोककाव्यस्याऽस्योत्तान एव वार्ताकल्पोऽर्थः 'मधुकरी जगा' वितिरूपः। मधुकर्या उद्गाने मध्यमधैवतस्वरसन्तानेन भवतु नाम माधुर्यस्य भानम् किन्तु नैतन्माधुर्यरसभावावहम् । पृथक्प्रयत्ननिष्पादितमिदं माधुर्यं वर्णगतं पदगतं पदबन्धगतञ्च । न भारवेः किरातार्जुनीय-महाकाव्ये मधुरिम्ण एतादृशस्य प्रतीतिर्दृश्यते । किरातमहाकाव्यस्य निम्नाङ्किते श्लोके वसन्तर्तुरेव वर्ण्यते यत्र मधुकरध्वनिः श्रुतिगोचरीकर्त्तुं शक्यते—

'कुसुमनगवनान्युपैतुकामां
किसलयिनीमवलम्ब्य चूतयष्टिम् ।
कुलनूपुरा निरासे
नलिनवनेषु पदं वसन्तलक्ष्मीः ॥,

अत्र मधुसमृद्धिसमेधितमेधायाः मधुकर्या उद्गानमेव केवलं न श्रुतिपथमायाति किन्तु वसन्तलक्ष्म्या नूपुरायमाणानामलीनां केलनिक्वणं श्रूयते, अपरतश्च सञ्चरता मलयमारुतेन सङ्गताया पङ्कजिन्या मुखमण्डले चूर्णकुन्तलायमानानां तेषामेव भृङ्गाणां मनोहरः कृष्णिमाऽपि दृष्टिपथं प्रयाति । इत्थं माघकविश्लोके प्रयत्नोपपादितवर्णसङ्गीतरयैव मधुरिमाऽनुभूयते । भारविश्लोके तु समधुरार्थस्य पदबन्धस्य वर्णमाधुर्यं प्रतीतिपथमागतमपि काव्यार्थं परिपुष्यत्तत्रैव सुखं रममाणं विभ्राजते ।

---

१. शिशुपालवध ६.२०
२. किरात० १०.३१

भाषान्तरनिबद्धकाव्यवत् संस्कृतभाषानिबद्धं काव्यमपि संस्कृतवाचो वर्णध्वनिसन्तानरूपमेवेति भवति सर्वजनसंवेद्याऽपातिकी प्रतीतिः । किन्तु पार्यन्तिकप्रतीतिगम्याः काव्यार्था अप्येतेष्वेव वर्णध्वनिसंतानो न केवलं श्रोतॄणां श्रवणाकर्षणमेव विदधाति किन्तु रसानुभवसम्पदमपि समुपस्करोति ।

भारवेर्गिरां प्रकृतिमाधुर्यस्य विशेषकेषु वर्णसावर्ण्यस्य प्राथम्यं स्पष्टमेव प्रतीयते । भारविणा स्वकृतौ किरातार्जुनीये तादृशानि पदानि निरायासं प्रयुक्तानि येषु वर्णानां स्वरात्मकानां व्यञ्जनात्मकानाञ्च निकटस्थं दूरस्थं वा श्रवणगम्यं सावर्ण्यं न केवलं श्रुतिसुखदं किन्तु काव्यार्थभावनायामुपस्कारकमुपकारकञ्च विभाव्यते । तथाहि 'श्रियः ·····वनेचरः' इति प्रारम्भमङ्गलश्लोककाव्य एव प्रयुक्तेषु पदेषु पदकदम्बकेषु वा यद्वर्णसावर्ण्यं श्रुतिगोचरीभवति । तत्र विशिष्टानां वर्णानां काचन सहजा मैत्री विभाव्यते । 'श्रियः कुरूणा' मित्यत्र विसर्जनीयानुस्वारयोः श्रव्यतासंपत्सौभगाय परस्परं संबन्धाकांक्षणम्, 'यमयुङ्क्त' इत्येकके पदे यकारमकारयोरग्रागतेन संयुक्तवर्णत्रिकेण सौहार्दकांक्षणम्, 'वर्णिलिङ्गी विदित' इत्यत्र समानश्रुतिकयोर्व्यञ्जनयोरनुप्रासात्मकमावर्तनम्, 'युधिष्ठिर' इति नामपदे षकारठकारयोः परस्परमर्धनारीश्वरायमाणयोर् यथेप्सितपदार्थस्थितिदार्ढ्यवैभवप्रत्यायनायाग्रयायिना रकारेण सङ्गमनम्, 'द्वैतवने वनेचर' इत्यत्र काकतालीयन्यायेन सङ्गतयोर्वकारनकारवर्णयोः शाश्वतिकसहस्थायित्वनिवेदनम् इति वर्णरामणीयकपरिच्छिन्नं पदनिबद्धवाक्यरामणीयकनिदानं पदरामणीयकं प्रतिभात्येव साहजिकम् । एवमन्यत्र प्रत्येकं सर्गे प्रत्येकं श्लोके यत्किञ्चिद् वर्णसावर्ण्यसंविधानकं तत् स्वयमेव विश्लेषयितुं शक्यम् । नैतद्वर्णसावर्ण्यं व्युत्पत्तिकारणकं न वाऽऽभ्यासिकम् । एतस्य कारणं तु कवेः प्रतिभैव यां विना किरातार्जुनीयं नाम महाकाव्यमेव न प्रसरेत, यथाकथञ्चित्प्रसृतमपि सहृदयानामुपहासायैव जायेत ।

किरातार्जुनीयस्पर्द्धया विरचितस्य माघमहाकवेः शिशुपालवधमहाकाव्यस्य 'श्रियः पति····· हरिः' इति मौलमङ्गलश्लोके नेदं स्वभावरम्यं वर्णसावर्ण्यमनुभवितुमलम् । 'श्रियः' 'श्रीमति' 'शासितुम्' इति पदत्रिके त्रिःशकारवर्णश्रवः कर्णकुहरस्य विशसनमिव वस्तुत आचरति । 'जगज्जगन्निवास इति समस्तपदे जकारवर्णः संयोगेऽसंयोगे वा श्रूयमाणः सुतरां दुःश्रवत्वाय सम्पद्यते । एवमेव 'वसन् ददर्शावतरन्तमम्बराद्' इति तालव्यवर्णश्रुतिमाधुर्यं पूर्वश्रुतेन दुःश्रुतेन वर्णश्रवणेन पुरस्क्रियमाणं न मनः प्रीतये प्रभवत् प्रतीयते । एवमन्यत्रापि यत्र तत्र स्वयमेवोह्यम् ।

भारविकाव्ये प्रकृतिमाधुर्यस्यापरं निदानं वर्णसावर्ण्यसौभाग्येन समं प्रतिसर्गं विनियुक्तानां वर्ण्यस्वभावावभासरमणीयानां विविधानां वृत्तानां विनियोजनं यथापूर्वं प्रतिपादितम् ।

अन्यन्निदानं भारवेः स्वयं स्वस्मै च कृतः कविकर्मनियमः । कः स नियमः ? इति तु 'इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः' इति भारवेः पूर्वोद्धृतश्लोकार्धस्य सर्वार्थस्वारस्यरूपो भवत्यत्र परिकरश्लोकः –

'स्वनिष्ठं वर्णमाधुर्यं वृत्तानां च विशेषतः ।
चिरनिर्वृत्तमप्येतद् भूयोभूयोऽभिदृश्यते ।।

अत्र प्रश्न एकः समुल्लसति । भारवेर्महाकाव्यं न सम्भोगश्रृंगाररसात्मकं न वा विप्रयोगशृङ्गाररसात्मकं तदात्वे तत्र कुतस्तरां माधुर्यं प्रतितिष्ठति ? रसविमर्शनाचार्यैः 'श्रृंगार एव मधुरः परः प्रह्लादनो रसः,[1] इति मतमास्थितम् । किरातार्जुनीयं च नाम महाकाव्यं युद्धवीररसात्मकं यत्रौजसः सहृदयहृदयस्य दीप्ततादायिन्यवस्थितिरेव युवितयुक्ता । अत्रैतदवधारणीयम् । भारविकाव्यस्य माधुर्यं भारविप्रयुक्तयोः रसभावपर्यवसायिनोः शब्दार्थयोः स्वच्छतारूपम्– झगित्यभिप्रायसमर्पणास्वभावम् । भवतु नाम भारविकाव्ये क्वचिदसमासा, क्वचिदल्पसमासा, क्वचिद्दीर्घसमासा सङ्घटना किन्तु तत्र सर्वत्र तस्या झगित्यर्थसमर्पकत्वं प्रतीयत एव । एवं तत्र सर्वत्र प्रसादाख्यो गुणः सम्भवत्येव अनेनैव प्रसादेन तत्र वर्णपद-वाक्यादीनां पूर्वोक्तं माधुर्यं स्वदते । यदि वर्ण-पद-वाक्यादिषु प्रसादो न स्यात् माधुर्यमपि तत्रत्यं न मनोरमं मनःप्रह्लादनं वा भवेत् । यदस्तु तदस्तु । पुण्यकर्मा भारविः । ततः सरस्वती प्रसन्नगम्भीरपदैव प्रवर्तते । भारवेर्गिरां प्रकृतिमधुरत्वे किरातार्जुनीयमहाप्रबन्धश्च प्रसन्नपदत्वेन सह गभीरार्थगर्भत्वमपि परमं निदानम् इत्थं भारवेर्गिरां मधुरत्वं प्रसन्नगम्भी-रपदत्वमिति का हानिः । नैकमपि भारवेः श्लोकवाक्यं प्रसन्नगम्भीरपदता-मतिक्रामति ।

प्रसङ्गान्तरान्तर्गते निम्नलिखिते श्लोके[1] महाकविर्भारविः काव्यराम-णीयकं काव्यमधुरिमाणं वा स्वाभिमतं सम्प्रकाशयितुकाम इव लभ्यते—

---

१. ध्वन्यालोकः, २.७

'संस्कारवत्वाद्रमयत्सु चेतः
प्रयोगशिक्षागुणभूषणेषु ।
जयं यथार्थेषु शरेषु पार्थ,
शब्देषु भावार्थमिवाशशंसे ।।'[1]

आद्यन्तं किरातार्जुनीयमहाकाव्यं काव्यान्तरमिव 'शब्द' एव। शब्दो वर्णारब्धः तत्तदर्थप्रत्यायकः। किरातार्जुनीयात्मके शब्दे भारविः किं कर्तुमभिवाञ्छति ? महाभारतमहासागरस्याऽन्तरवस्थितस्य स्वसंवेदनसंविदितस्य स्वमनोनुकूलस्य काव्यसुधाघटसंभृतस्य सारिष्ठशास्त्राऽमृतस्य सानन्दं समुद्धरणम् समाहितचित्तेन स्वयं पानं परेभ्यश्च संप्रदानमिति वा। भारवेरेतदभिलषितं फलितमित्यत्र भारविकाव्यसहृदया प्रष्टव्याः ।

कथंभूतश्चाऽयं किरातार्जुनीयरूपः शब्दः 'यथार्थ' इति। 'यथार्थ' इति कः पदार्थः ? वस्तुस्थित्यनुयायीति। न स्वकल्पनापोढः स्वमनीषोत्प्रेक्षितो वा। तात्पर्यमिदं यत् किरातार्जुनीयरूपेषु शब्देषु यद् वर्ण्यमर्थजातं यद्वेद्यमर्थतत्त्वं वा तत्सर्वं यथाभूता अर्थास्तत्स्वभावानुसारि न प्रौढोक्तिमात्रसिद्धमिति वा। पुनश्च किं 'रूपः' किरातार्जुनीयमिति शब्दराशिः ? प्रयोग-शिक्षा-गुण-भूषणेषु संस्कारवत्त्वाच्चेतोहरो मनोरमो हृदयाह्लाददायीति वेत्यर्थः । किरातकाव्यरूपाः शब्दाः प्रयोगे संस्कारवन्तः। प्रयोगे संस्कारवन्त इति कोऽर्थः ? प्रयोगः व्यवहारः यथाऽभियुक्तैर्व्यास-वाल्मीकि-कालिदास-प्रभृतिभिर्महाकविभिः क्रान्तदर्शिभिर्व्यवह्रियन्ते। प्रचुरप्रयोगपतितत्वेऽपि नवनवा इवाभान्तः प्रयुज्यन्ते तथा व्यवहार इति। एतादृशि प्रयोगे कवेः प्रयोक्तुरात्मसंस्कार एव प्रमुखः सचिवः आत्मनि संस्कृते सति समाहितचित्ते पदपदार्थसामस्त्यं स्वस्वभावानुरूपं प्रतिफलति। किरातकाव्यरूपाः शब्दाः 'शिक्षायां संस्कारवन्तः ।' शिक्षायां संस्कारवन्त इति कोऽर्थः ? शिक्षेत्यभ्यास इत्यर्थः। अभ्यासे संस्कारवत्वं नाम प्रयोगकर्मणि चित्रकारकौशलप्रदर्शनम् द्रष्टुर्भावयतुश्च हृदये 'सुन्दरेयं कृतिः' 'मनोरमोऽयं प्रबन्धः' इति भावोन्मेषश्च। एतदपि स्वसंवेदनसिद्धमेव किरातकाव्यसहृदयानाम्। किरातमहाकाव्यरूपः शब्दा गुणेषु संस्कारवन्तः गुणेष्विति श्लेषप्रसादसमतादिषु । तत्र संस्कारवत्वं नाम गुणानामोजःप्रसादादीनां वा रसभावास्वादाभिव्यङ्‌त्वान्वयव्यतिरेकित्वम् । अतएव किरातार्जुनीयरूपमहाकाव्यप्रबन्धः प्रारम्भतः पर्यन्तं यावत् रसभावाभिनिविष्टो रसभावास्वाद-

---

१. किरात०, १७.६

समर्पणोद्धुरो जागर्तीति प्रतिभाति। किरातार्जुनीयरूपः शब्दो भूषणेपु संस्कारवान् किरातार्जुनीयरूपशब्दस्य भूषणेपु शब्दार्थशोभाधायकेष्वनुप्रासोपमादिषु संस्कारवत्त्वं नाम रसभावाभिव्यक्त्यपेक्षया समीक्ष्य विनिवेशितत्वम्। एतत्खलु महारहस्यं महाकाव्यस्य ध्वनिप्रस्थापनपरमाचार्यैरानन्दवर्धनाचार्यैः सकलसत्काव्योपनिपद्भूतस्यैतस्य महारहस्यस्य मुद्रोन्मुद्रणं निम्नाङ्कितेपु कारिकाश्लोकेपु ससंरम्भं कृतं दृश्यते—

ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः ।
रूपकादिरलङ्कारवर्ग एति यथार्थताम् ॥
विवक्षा तत्परत्वेन नाऽङ्गित्वेन कदाचन ।
काले च ग्रहणत्यागौ नातिनिर्वहणैषिता ॥
निर्व्यूढावपि चाऽङ्गत्वे यत्नेन प्रत्यवेक्षणम् ।
रूपकादेरलङ्कारवर्गस्याऽङ्गत्वसाधनम् ॥

एतत्सर्वं यत्र काव्ये समस्ति तत्कथं न नाम प्रकृतिमधुरं प्रकृतिरमणीयं नवनवोन्मेपशालि च समुद्भवेत्।

एतत् किमप्यत्र न विस्मरणीयम्——

'किरातकाव्यं श्रुतमप्यपूर्वं
यथा सदा विस्मयमातनोति।
"क्षणे क्षणे यन्नवतामुपैति।
तदेव रूपं रमणीयतायाः ॥"

—०—

१. ध्वन्यालोके, २. १७-१९